# प्रस्तावना

धर्मशास्त्रना द्रव्यानुयोग गणितानुयोग, चरणकरणानुयोग अने कथानुयोग सिवायना त्रणे अनुयोगो कंइक बहुबुद्धिवंत अने प्रयत्नशील मनुष्यनेज उपकारक थइ पडे तेम छे. कारणके अतिव्यवसायी अने साधारणबुद्धिवान माणसोने तो विशेषे करीने अवसर अने बोधना अभावे कथाओज उपकारक थइ शकेछे. अने ते कथाओ मार्गभूल्याने दीपक समान छे केमके ते कथाओ सांभळी तेने पोताना जीवनसाथे सरखावी सारासारानो विचारकरी पोतानुं जीवन उन्नतने योग्य बनावी शके छे.

जेनुं सेवन मनुष्यने पराधीन बनावी लाभालाभनो विचार कर्या विना नीचेने नीचे आत्मप्रगतिथी हठावे ते व्यसन छे. अने आवा अनेक जातनां व्यसनो आत्महितने नहिं विचारनारा मनुष्योना जीवनमां घरकरी बेठेलां होय छे आ सर्व व्यसनोमां महान अनर्थकारी ने आ भव अने परभव बन्नेने बगाडनार द्युत मांस मदिरा वेश्या शिकार चोरी परस्त्री ए मुख्यछे के जेना सेवनथी माणस सातमी नरकसुधीनी घोर यातनाओ पामेछे. व्यसनोना सेवनथी मनुष्य केवा दुःखी बनेछे ते जणावी मनुष्य मात्र तेथी पराङ्मुख बनी पोतानुं जीवन सुधारे ते उद्देशथी ग्रंथकार श्रीमान आचार्यसोमकीर्ति ए आ ग्रंथमां सात व्यसनो उपर प्रासंगिक बोध गर्भित विस्तीर्ण कथाओ आपी छे

ग्रन्थरचनाकाळ–अने ग्रन्थरचयिता—

आ ग्रन्थना रचयिता श्रीमद् आचार्य सोमकीर्ति छे ते निर्विवाद छे. कारणके प्रतिमां दरेक कथाओने अन्ते 'आचार्य

सोमकीर्तिविरचित सप्तव्यसन कथासमुच्चये' एम करी लखेलछे. तेमज दरेक कथाना दरेक श्लोकने अंते पण ग्रन्थकार 'सोम' शब्द लावेल छे अने ते 'नंदीतट' नामना गाममां १५२६ना महासुदी १मे रचायेलो छे ते वात 'रसनयनसमेते' ए श्लोकथी जणावेल छे. आ ग्रन्थ केवल बे मासनी अंदरज संपूर्ण प्रेसकोपी विगेरे तैयार करी सुंदर उंची जातना लेजर पेपर उपर मोटा टाइपमां तैयार करवामां आवेल छे. तेमज आ ग्रंथने प्रकाशन करवा माटे तेनी सरळ भाषा, अप्रसिद्धता अने सर्वोपयोगी नीवडे तेवो तेनो विषय विगेरे जोइ हृदय खेंचायुं छे. छतां ते सर्वनी सार्थकतातो त्यारेज गणाय के ज्यारे वांचक अने श्रोता आना वांचनथी लाभ उठावे.

आ ग्रन्थने तैयार करवामाटे महाप्रभावशाळी परमपूज्यआचार्य श्रीमान् विजयनेमिसूरिश्वरजीना शिष्य उपाध्याय विज्ञानविजयजी तथा परमपूज्य शांतमूर्ति पन्यास श्रीमद् धर्मविजयमहाराजना शिष्य पन्यास सुरेन्द्रविजयजी द्वारा एकेक प्रति मेळवी शकवा भाग्यशाळी थया छीए ते बदल ते बंन्नेनो उपकार मानीए छीए.

आ ग्रन्थनी शुद्धि जाळववा यथाशकित प्रयत्न करेल छे. छतां प्रेमदोषथी के थयेल महज स्खलना बदल वांचक जरुर क्षमा आपशे.

५-१-३५

गांधी मफतलाल झवेरचंद अमदावाद.

आचार्यश्रीसोमकीर्तिविरचितः—

# सप्तव्यसनकथासमुच्चयः

ॐ नमः सिद्धेभ्यः

प्रणम्य श्रीजिनान् सिद्धाना-चार्यान् पाठकान् यतीन्। सर्वद्वन्द्वविनिर्मुक्तान्, सर्वकामार्थदायकान् ॥१॥
ततोऽपि सारदां देवीम्, कल्याणावलीवल्लरीम्। जिनेन्द्रवदनोद्भूतां, नत्वा भक्त्या प्रमोदतः ॥२॥
गुरूणां चरणौ नत्वा, वक्ष्ये बुद्ध्यानुसारतः। सप्तानां व्यसनानां हि, कथां भव्यहिताय वै ॥३॥
द्यूतं१ मांसं२ सुरा३ वेश्या४, पापर्द्धि५ चौरिका६ तथा। परस्त्रीगमनं७ चेति, सप्तैव व्यसनानि हि ॥४॥
एकैकव्यसनाभूता, ये ये जीवा यथापरं। दुःखं नानाविधं प्राप्तास्तांस्तां वक्ष्ये विशेषतः ॥ ५ ॥
पाण्डुपुत्रो बलाढ्योऽसौ, युधिष्ठिरनराग्रणी। द्यूतव्यसनतो दुःखं, सम्प्राप्तो राज्यहानिकृत् ॥ ६ ॥
मांसदोषाद् बको नाम, राजपुत्रो हि दुःखभाक्। सुरादोषविशेषेण, यादवाश्चण्डतेजसः ॥ ७ ॥
वेश्याव्यसनतो दुःखम्, सम्प्राप्तो चारुदत्तकः। पापर्द्धिदोषतो नूनम्, ब्रह्मदत्तो नराधिपः ॥ ८ ॥

चौर्यकर्मप्रभावेन, शिवभूतिः द्विजोत्तमः । परस्त्रीगमनाद् दुःखम्, प्राप्तोऽसौ रावणो भटः ॥९॥
एकैकव्यसनात् दुःखम्, प्राप्ताश्चैते विचक्षणाः। सप्तव्यसनतः किं न, प्राणी प्राप्तोऽतिदुःखताम् ॥१०॥
सप्तानां व्यसनानां हि, विचारोऽयं कृतः कथम् । केन वा कथितो लोके, पृष्टः केनाऽपि भक्तितः ॥११॥
जम्बुद्वीपे भूवि ख्याते, क्षेत्रे श्रीभरताऽभिधे । मगधदेशेऽतिविख्याते, पुरं राजगृहं वरम् ॥ १२ ॥
श्रेणिको नाम भूपालो, राज्यं पालति तत्त्वतः। तस्य श्री चेलणा नाम, राज्ञी--धर्म्मधुरंधरा ॥ १३ ॥
राज्यं पालति भूपाले, साधुपालनतत्परे । एकदा विपुलोद्याने, सम्प्राप्तोऽसौ जिनेश्वरः ॥ १४ ॥
वनपालोऽपि भूपेन्द्रम्, फलपुष्पादिभिर्युतः । गत्वाऽविज्ञपयन् नत्वा, श्रीवीरस्य समागमम् ॥१५॥
शृणु श्रेणिक! भूपेन्द्र!, श्रीवीरोऽत्र समागतः। तस्याऽऽगमनपुण्येन, जीव नन्द चिरं जय ॥१६॥
राजा श्रुत्वा समायान्तं, श्रीवीरं तु प्रमोदभाक्। वनपालाय तुष्टोऽदात्, स्ववस्त्राभरणादिकम् ॥१७॥
आनंदभेरीं ततो दत्त्वा, भव्यानाहूय तत्क्षणात्। पूजोपहारमादाय, गजारूढो वने गतः ॥१८॥
दृष्ट्वाऽथ दूरतस्तत्र, सरणं समवादिकम् । गजादवातरद्भूपो, जिनभक्त्या प्रमोदितः ॥ १९ ॥
मध्ये श्रीजिननाथस्य, समवादि सरणस्य हि। गत्वा दृष्ट्वा जिनेन्द्रं तम्, सप्रदक्षणमानमत् ॥२०॥

पूजां चाऽष्टविधां कृत्वा, पुनर्नत्वा जिनेश्वरम् । भक्त्या मानवके कोष्टे, निविष्टोऽसौ महीपतिः ॥२१॥
धर्मं शुश्राव जैनेन्द्रम्, सर्वभूतहितावहम् । ततः प्रस्तावमासाद्य, प्रपच्छ श्रीजिनेश्वरम् ॥ २२ ॥
केन वा कर्म्मणा स्वामिन्, संसारगहनेऽनिशम्, । दुक्खं प्राप्नोति जीवोऽयं, कथं तरति वा भवात् ॥२३
जगाद जिननाथोऽथ, श्रृणु श्रेणिक ! भूपते ! । इहाऽवाधाकरं नूनं, युक्तं पृष्टं त्वया ध्रुवम् ॥२४॥
कथयामि तवाऽत्राऽहम्, संसारश्चैव कारणम् । प्राणी प्राप्नोति दुःखानि, सप्तव्यसनदोषतः ॥२५॥
व्यसनाभिभूतो जीवो, यद् यद्दुःखमवाप्नुयात् । तद्दुःखं कथितुं कोऽत्र, समर्थो भुवनत्रये ॥२६॥
एकैकव्यसनेनैव, पीडिता ये नरा भुवि । तेषां प्रत्येकतो भूप !, कथां वक्ष्ये तवाऽग्रतः ॥ २७ ॥
ततो हृष्टो महीपालो, जगादैवं जिनेश्वरम् । सप्तव्यसनजं दुःखम्, कथयस्व प्रभोर्मम ॥ २८ ॥
श्रृणु भूप ! महाभाग !, सप्तव्यसनजां कथां । कथयामि समासेन, पवित्रां पापनाशिनीम् ॥२९॥
येन येनाऽत्र जीवेन, प्राप्तं दुःखं यथायथम् । तथा तथा समासेन, कथयामि कथां वराम् ॥ ३० ॥
...प्रभावेन, युधिष्ठिरमहीपतिः । राज्यभ्रंसादिजं दुःखं, प्राप्तो भुवनविश्रुतम् ॥ ३१ ॥
...नाथस्य, कथां तेऽत्र कथयाम्यहम् । यस्याः श्रवणमात्रेण, प्राणी पापात् प्रमुच्यते ॥ ३२

द्वीपे जम्बुद्रुमाऽभिख्ये, क्षेत्रे श्रीभरताऽभिधे। कुरुदेशस्य मध्येऽत्र, हस्तिनागपुरं वरं ॥ ३३ ॥
तत्रैव कौरवानां हि, वंशे राजा विचक्षणः। धृतो नाम परं ख्यातो, न्यायपालनतत्परः ॥ ३४ ॥
तस्य राज्ञी त्रयं भाति, पट्टराज्ञीतया भुवि। अम्बा१ बालिका२ ख्याता, तथैवाऽन्याम्बिकाऽभिधा ॥३५
धृतराष्ट्रोऽथ पाण्डुश्च, विदुरो वै विचक्षणः। तासां क्रमेण सञ्जाताः, पुत्रास्त्वेते त्रयो ध्रुवम् ॥३६॥
धृतराष्ट्रस्य सञ्जाता, प्रिया गन्धारिकाऽभिधा। पाण्डोश्चापि तु सञ्जाता, कुन्ता नाम महासती ॥३७॥
धृतराष्ट्रात्समुद्भूताः, पुत्रा दुर्योधनादयः। पाण्डोः कुन्त्यां समुत्पन्नाः, पाण्डवास्ते त्रयोऽग्रजाः ॥३८॥
मुद्र यां पुत्रौ तु सञ्जातौ, सहदेवनकुलाऽभिधौ। कन्यकायास्तु योगेन, कुन्त्यां कर्णोऽपि जातवान् ॥ ३९
एवं पुत्रैश्च पौत्रैश्च, धृतो राज्यं प्रकुर्वते। एकदाऽसौ शरत्काले, गगनेऽभ्रं विलोकयेत् ॥ ४० ॥
रम्यं प्रासादशिखरम्, दूरतो दृश्यते यथा। तथाविधं विलोक्याऽसौ, चित्रकारानुवाच वै ॥ ४१ ॥
चित्रकारा द्रुतं चैनम्, अभ्रं चित्रयतामिति। यथाऽभ्रंसदृशान् लोके, प्रासादान् कारयाम्यहम् ॥४२॥
चित्रकारास्ततो वर्णान्, नीत्वाऽऽरब्धं तु चित्रकम्। तावत् पातवशाज्जातम्, क्वाप्यभ्रम् खण्डतां क्षणात् ४३
चित्रकारैस्तदा भूपो, विज्ञप्तो भयपूरितैः। राजन्! वायुवशाज्जातम्, काप्यभ्रं ज्ञायते नहि ॥ ४४ ॥

राजाऽप्यभ्रं तथाऽऽलोक्य, संसारक्षणभङ्गुरम्। ज्ञात्वा वैराग्यमापन्न-श्चिन्तामेना चकार च ॥४५ ॥
यथाऽभ्रं च गतं भङ्गम्, संसारं तु तथैव हि। कुटुम्बपुत्रपुत्राद्यैः, रामास्वजनबन्धुभिः ॥ ४६ ॥
सर्वै मिलित्वा निष्पन्नं, समुदायः सुदुःखदः। तस्य मोहेन जीवोऽयम्, दुःखं नानाविधं श्रयेत् ॥४७॥
अतोऽहं सकलं त्यक्त्वा, बन्धुपुत्रधनादिकम्। दीक्षां भजामि जैनेन्द्रीम्, शाश्वतस्थानप्रदायिनीम्॥ ४८
ज्येष्ठपुत्रे ततो दत्वा, राज्यं निजक्रमागतं । द्वितीये युवराज्यं तु, विदुरेण समं गतः ॥ ४९ ॥
दीक्षां बभार राजाऽसौ, श्रीमोक्षपददायिनीम्। अधोगतियियासूनाम्, सा न दीक्षा कदाचन ॥५०॥
दुस्तरं तु तपः कृत्वा, कृतं घातिक्षयं तदा। केवलज्ञानमुत्पाद्य, यातोऽसौ परमं पदम् ॥ ५१ ॥
मुनीन्द्रो विदुरो नाम, विजहार महीतले। राज्यं प्राज्यं परं चक्रे, धृतराष्ट्रोऽथ पाण्डुना ॥ ५२ ॥
धृतराष्ट्रस्य पाण्डोश्च, राज्यं पालयतस्तदा। गतोऽतिबहुलः काल-स्ताभ्यां ज्ञातो न सर्वथा ॥५३॥
एकदा भ्रमरं दृष्ट्वा, मृतं कमलकोटरे। वैराग्यं परमं प्राप्य, धृतराष्ट्रोऽपि पाण्डुना ॥ ५४ ॥
दत्तं दुर्योधनादीनाम्, चार्द्धराज्यं तदा निजम्। अर्द्धं तु पाण्डुपुत्राणाम्, पञ्चानामपि चाखिलम्॥५५
ताभ्याम् दीक्षा ततो जैनी, धृता सर्वहितावहा। तपोऽपि दुश्चरं ताभ्याम्, कर्तुमारेभिरे तदा ॥५६॥

कौरवाः पाण्डवास्ते वै, परं स्नेहवशंगताः । न जानन्ति गतं कालं, निमग्नाः सुखसागरे ॥ ५७ ॥
पञ्चानां तु मिलित्वा हि, चार्द्धराज्यं यदा तदा। अर्द्धराज्यविभूत्या हि, पाण्डवाश्चण्डतेजसः ॥५८॥
अर्द्धराज्येन सञ्जातम्, कौरवानां शतं तदा। हीनं तु वस्त्रशस्त्राद्यैस्तेजः सर्वत्र सम्पदाम् ॥ ५९ ॥
तदाऽथ शकुनो नाम, मातुलो भूवि विश्रुतः। सन्धिदोषं परं चक्रे, तेषां प्रीतिविनाशकं ॥ ६० ॥
पश्यन्तु कौरवाः युयम्, क शतं भवतामपि। क चात्र पाण्डवाः पञ्च, क राज्यं चार्द्धभागकम्॥६१॥
पाण्डवा राज्यभूत्या वै, दृश्यन्ते तेजसान्विताः। भवान् तु शतं चात्र, गतच्छायं विलोक्यते ॥६२॥
सर्वेषामपि वेषानां, वेषश्चैको धनस्य हि। यद्धनं पञ्चधा भज्यम्, तद्धनं शतधा कथम् ॥६३॥
प्रत्यहं प्रेरणादुष्टाः, कौरवास्ते तदाऽखिलाः। दुर्योधनेन शान्ति ते, नीता बुद्धिवता तदा ॥ ६४ ॥
बुद्धिकौशल्ययोगेन, लाक्षागारं विनिर्म्मितम्। उपरिष्टादधश्चापि, लाक्षा सर्वत्र योजिता ॥६५॥
एकदा कौरवैः सर्वैः, पाण्डवास्तेन मन्त्रिताः। युधिष्ठिरादयस्तेऽमी, कुन्त्या युक्ताः समागताः ॥६६॥
विचित्रतोरणं गेहम्, दृष्ट्वा प्रीतिमुपागताः। मुग्धचित्ताः स्वचित्ते ते, पाण्डवाः पुण्यचेतसः॥६७॥
गेहमध्ये तु ते नीता, भोजनार्थं निवेशिताः। भोजयित्वाऽतिभक्त्या वै, शय्यास्तेषां समर्पिताः॥६८॥

क्रमेण रममाणास्ते पाण्डवाश्चण्डतेजसः। माकन्दीं नगरीं प्रापुः, शक्रस्य नगरीसमाम् ॥ ८१ ॥
द्रुपदो नाम भूपालो, भार्या तस्य जयावती। द्रुपदी नामतः पुत्री, विख्याता क्षितिमण्डले ॥८२॥
पिता पुत्रीं ततो दृष्ट्वा, नवयौवनभूषिताम्। विवाह चिन्तया ग्रस्तः, पुत्रीदुःखं महात्मनां ॥ ८३ ॥
अमात्यान् सकलान् राजा, पृष्टवान् कारणं निजम्। ममाऽस्ति च महादुःखं, पुत्र्या वीवाहसम्भवम् ॥८४॥
कस्मै देया तु कन्येयम्, योग्याय च वराय च। विमृश्य कथ्यतां शीघ्रम्, दुःखातीतो भवाम्यहम् ॥८५॥
ततो विमृश्य तैरुक्तम्, शृणु भूप ! महाशय !। स्वयं करोति प्रौढानामनुढानां हि योषिताम् ॥८६॥
श्रुत्वा भूपोऽपि चित्ते स्वे, तुष्टोऽभूत् सत्यभाषया। सुमुहूर्त्ते शुभे योगे, कृतस्तत्र स्वयंवरः ॥८७॥
नानादेशस्थभूपेषु, प्रेषितं तु निमन्त्रणम्। दुर्योधनादयो भूपाः, समायातास्तथाऽपरे॥ ८८ ॥
राधावेधस्तु तत्रैव, स्थापितो वर्त्तते तदा। तत्रैव पाण्डवास्तेऽमी, आगता दैवयोगतः ॥ ८९ ॥
निजं वेषं परावृत्य, परं प्रच्छन्नवृत्तयः। कृतं कार्पटिकं वेषम्, लोकानां वञ्चनाय वै ॥ ९० ॥
स्वयंवराय भूपाला, मिलिताः सर्वदेशजाः। राधावेधाय नो शक्ताः, यदा म्लानमुखाः स्थिताः ॥९१॥
अर्जुनोऽपि तदा प्रोचे, भो ! भो ! शृणुत भूमिपाः। राधावेधाय यः शक्तः, स किं भूपसुतां वरेत् ॥

कुलजातिविहीनोऽपि, यदा वराति कन्यकाम्। तदा विलोकयामीति, किञ्चित् पौरुषं निजम् ॥९३॥
विहस्यैवं नृपाः सर्वे, प्रोचुः कार्पटिकं प्रति। भोः भोः किं त्वं हि पार्थोऽस्ति, यद्येवं प्रोच्यतेऽधुना ॥
तदा जगाद पार्थोऽसौ, वाक्यं मे श्रुयतां नृपाः। पृथिव्यामेकपार्थोऽस्ति, नाऽन्यो लोकेऽपरः पुमान् ॥ ९५॥
ततो नृपतयः प्रोचु-र्धनुर्विद्याविशारदः। पृथिव्यामेकपार्थोऽस्ति, नाऽपरो जनविश्रुतः ॥९६॥
भवतां तर्हि किं कार्यम्, यः कोऽपि भवतामिह। कार्यं कार्येण सर्वत्र, किं वादेन प्रयोजनम् ॥९७॥
भूपाः सर्वे तदा प्रोचुः, किमस्माकं प्रयोजनं। जात्या कुलेन किं साध्यम्, कुरु कार्यपरंपराम्॥९८॥
भूपानां वचनं श्रुत्वा, पार्थः प्रौढपराक्रमः। परिकरं बन्धयित्वाऽथ, ढुढौके लीलयाऽन्वितः ॥९९॥
करेण धनुरादाय, भूपतीनां पुरः स्थितः। जगाद वचनं वाग्मी श्रूयतां भो नराधिपाः ॥ १०० ॥
मयेदं दीयते रम्यं, भवतां धनुरुत्तमम्। चटाप्यतां स्वशक्त्या वै, पश्चाद्वादो भविष्यति ॥१०१॥
तदा भूपतिभिः प्रोक्तम्, शृणु त्वं भो भटोत्तम!। चटापयितुं त्वया शक्यम्, नान्यैः स्वल्पबलैः नरैः १०२
भूपानां वचनं श्रुत्वा, पार्थो भूरिपराक्रमः। चटापयद्धनुस्तत्र, पश्यतां सर्वभूभृताम् ॥१०३ ॥
धनुरास्फालयद्वेगाज्जनविस्मयकारणम्। मयूरास्तु स्वनं चक्रे, मेघगर्जनशङ्कया ॥ १०४ ॥

गृह्णन्तु भूमिपाश्चैनम्, ज्यारूढं च कृतं धनुः ॥१०५॥
चटाप्य च धनुस्तत्र, पुनः प्रोवाच भूभुजाम्। तेषां तु वचनं नीत्वा, पार्थो भूरिपराक्रमः ॥१०६॥
भूपालैस्तु तदा प्रोक्तम्, त्वद्योग्यं प्रवरं धनुः। राधावेधं परं चक्रे, पश्यतां भुभूजां तदा ॥ १०७ ॥
उर्ध्वमुष्टिमधोदृष्टिम्, कृत्वा प्रार्थः पराक्रमी। भर्म्यभृङ्गारमादाय, मालां नीत्वा मनोहराम् ॥१०८॥
राधावेधे ततो जाते, द्रौपदी तु समागता। स्थितस्य पञ्चमध्येऽस्य, मालावायुवशात्तुदत् ॥ १०९॥
कण्ठे चारोपयन्माला-मर्जुनस्य मनस्विनः। वरिताः पञ्चपुरुषा द्रौपद्या शीलभ्रष्टया ॥११०॥
त्रुटितायां तु मालायाम्, लोकानां कलकलोऽभवत्। अस्मत्सु विद्यमानेषु, वृत्तः कार्पटिकः कथम् ॥१११॥
द्रौपद्याचरिते तस्मिन्, भूपाः क्रोधवशंगताः। तत्र केनचिदुक्तम्, दूतो वै प्रेष्यतामिति ॥११२॥
भूपाः सर्वेऽपि मिलिताः, युद्धार्थं तत्क्षणादपि। गत्वा दूतोऽपि तं प्राह, शृणु भूपैर्निवेदितम् ॥११३॥
दूतोऽथ प्रेषितस्तैश्च, समीपे तस्य धन्विनः। भूपान्मुक्त्वा वृत्तस्त्वं हि, मूढत्वं कृतमेतया ॥११४॥
कन्यां दत्वा तु भूपेभ्यो, जीव्यतां सुखतस्त्वया। भूपेभ्यः कन्यकामेनाम्, तिष्ठ त्वं हि सुखेन वै ॥११५॥
निपुणत्वं त्वया चित्ते, चिन्तयित्वा प्रदीयताम्। दास्यामि कन्यकां सत्यम्, रणे वीरक्षयावहे ॥ ११६ ॥
ततो दूतवचः श्रुत्वा, पार्थश्चेवमुवाच तम्।

दृष्टं श्रुतं कदाचिन्निजनारी दीयते कथम्। येषा श्रद्धा परस्त्रीषु, ध्रुवं दास्यामि संयुगे॥ ११७ ॥
दूतं निर्घाटयद्दुष्टो, गत्वा दूतोऽनिवेदयत्। दूतस्य वचनेनैव, रुष्टाः सर्वे नराधिपाः ॥११८ ॥
संनह्य निर्गताः सर्वे, युद्धार्थं च बलोद्धताः। निर्गतान् सुभटान् दृष्ट्वा, पार्थः क्रोधेन पूरितः ॥११९॥
श्वसुरेणापि सहित-श्चक्रे युद्धं तदाद्भूतम्। त्रासितास्तेन ते भूपा, ये स्थिता संयुगेऽग्रतः॥१२०॥
ततो भटक्षयं दृष्ट्वा, दुर्योधनो बलान्वितः। गाङ्गेयादिभटैः सार्द्धं, सनद्धस्थाद्रणाङ्गणे ॥ १२१ ॥
रणे नन्दीसुतं दृष्ट्वा, पार्थश्चिन्तामुपागतः। ममाऽस्ति पूज्यपादोऽयम्, कथं वध्यो मया ध्रुवम्॥१२२॥
विमृश्यैवं स्वनामाङ्कं, बाणं तं प्रति चाऽक्षिपत्। गाङ्गेयस्तं शरं दृष्ट्वा, निजाङ्के विमुखं स्थितम्। १२३
वाचयित्वा तु तं बाणं, ज्ञातं पार्थसमागमम्। दुर्योधनं तदा प्राह, पश्यताम् पाण्डवा इमे॥१२४॥
इदृशं पौरुषं लोके, नास्ति वै पाण्डवं विना। ततो दुर्योधनो प्राह, कथं ज्ञातास्त्वया प्रभो!॥१२५॥
बाणं प्रदर्शितं तस्मै, पार्थनामाङ्कितं च यत्। बाणं तं वाचयित्वाऽथ, दुःखाविष्टो नराधिपः ॥ १२६॥
रथादुत्तीर्य दुःखेन, मायया चाश्रुभिर्युतः। प्रसारितकरो भूत्वा, गतोऽसौ सन्मुखं द्रुतम् ॥ १२७ ॥
दुःखेन रोदनं कुर्वन्, दुःखगद्गदया गिरा। दुर्योधनोऽपि प्रोवाच, भ्रातॄणां सन्मुखं स्थितः ॥१२८

लोकाऽपवाददग्धोऽहम्, किं करोमि हताशकः । मत्पुण्येन समायाताः, यूयं सर्वेऽपि पाण्डवाः ॥१२९॥
मया गेहं च न ज्ञातम्, कृतं दग्धं कदापि न । तथापि मम सञ्जातो-ऽपवादो लोकसम्भवः ॥१३०॥
ध्रुवं निर्म्मलचित्तानाम्, पापं नैव कदाचन। मम पूण्यवशात्सत्यम्, समायातास्तु पाण्डवाः॥१३१॥
कौरवाः पाण्डवाः सर्व्वे, मिलितास्ते परस्परम् । सर्वेषां चात्र लोकानाम्, चित्ते हर्षस्तदाऽभवत् ॥
सुमुहूर्ते शुभे योगे, नीतं लग्नं नृपैस्तदा। द्रौपद्या पार्थराजस्य, विवाहः सोत्सवोऽभवत् ॥ १३३ ॥
कृत्वा विवाहं ते सर्वे, यियाता निजमन्दिरम्। पाण्डवैः सहिता याताः, कौरवाः स्नेहपूरिताः ॥१३४॥
पूर्व्वरीत्या पुनस्तस्थुः, सर्वे कौरवपाण्डवाः। विश्वासं तु सदा चक्रुः, स्नेहं चैव परस्परम् ॥१३५॥
कियत् काले गते तत्र, शकुनो नाम मातुलः। पूर्ववद्विरसस्तेन, कर्तुमारेभिरे तदा ॥१३६॥
दुर्जनानां स्वभावोऽयं, न दुःखं कलहं विना। चन्द्रिकां गगने दृष्ट्वा, को रटेन्मण्डलं विना ॥१३७॥
शकुनस्तत्र तदा चक्रे, तयोः प्रीतिर्विखण्डनम्। गते स्नेहे खलस्यैव, न स्यात् प्रीतिः कुतोऽपिवा ॥१३८॥
कौरवास्ते तदा लग्ना-स्तेषां छिद्रावलोकने। प्रत्यहं पृष्ठतो लग्नाः, सत्पात्रस्येव शाकिनी ॥ १३९ ॥
एकदा बुद्धिरुत्पन्ना, युधिष्ठिरमहीभुजः । भाग्यहीनतया नूनम्, द्युतस्य व्यसने खलु ॥ १४० ॥

प्रत्यहं कुरुते क्रीडाम्, द्युतस्य रसपूरितः । युधिष्ठिरनराधीश–स्तदाऽभाग्येन प्रेरितः ॥१४१॥
कौरवाः पाण्डवास्त्वेते, सभामध्येऽन्यदा स्थिताः। दूर्योधनेन राजाऽसौ, चक्रे द्युतं तु पापतः ॥१४२॥
दूर्योधननरेन्द्रस्य, पाशको वाञ्छितोऽपतत्। भीमहक्कारशब्देन, भवत्येव स प्राङ्मुखः ॥ १४३ ॥
भीमनिर्घाटनोपायम्, चिन्तयन्कौरवाग्रणी। विमृश्यमाने समुत्पन्ना, बुद्धिः द्रोहकरा परा ॥१४४॥
शृणु भीम महाभाग!, तृष्णया पीडितोऽस्म्यहम्। सा तृष्णा च त्वया नाशम्, याति नान्यैः कदाचन १४५
भीमसेनोऽपि तत्रोचे, जलमानापयाम्यहम्। कर्पूरवासितं शीतम्, तव तृष्णानिवारकम् ॥ १४६ ॥
दूर्योधनः पुनः प्राह, नेदृशं रोचते जलम्। इदृशस्य जलस्यैवाऽऽनेतारो मे सहस्त्रशः ॥ १४७ ॥
भीमः प्रोवाच हे नाथ!, जलमानीयते मया। तव चित्तस्थितं ब्रुहि, यत्र कुत्राऽपि संस्थितम् ॥१४८॥
गङ्गायास्तु ह्रदेऽगाधे, कटिदघ्ने तवैव हि। गदया हत्वा च्छटाजं, तज्जले हि रुचिर्मम ॥ १४९ ॥
श्रुत्वा भीमोऽपि तत्राऽगाल्लज्जया चित्तवर्जितः। यामद्वयं गतं यावत्तावद्राज्ञा तु किं कृतम् ॥१५०॥
प्रथमं हारितः कोशो, द्वितीये देशोऽपि हारितः। तृतीये तु गजाः सर्वे, चतुर्थे वाजिनो ध्रुवम् ॥१५१॥
पञ्चमे वाहनं सर्वं, गोमाहिष्यादिकं तथा। षष्ठे तु द्रौपदीयुक्त–मन्तपुरमहारयत् ॥ १५२ ॥

शरीराऽऽभरणादीनि, सो वारे सप्तमे तथा । तावत् भीमो जलं नीत्वा, समायातोऽतिवेगतः ॥१५३॥
गृहाणेनं जलं नाथ !, मयाऽऽनीतं तव प्रियम्। तदा दुर्योधनः प्राह, गता तृष्णाऽतिदूरतः ॥१५४॥
युधिष्ठिरं गतच्छायं, दृष्ट्वा भीमोऽतिदुःखतः । विषादं परमं चक्रे, वञ्चितोऽहमनेन वै ॥ १५५ ॥
दुर्योधनोऽपि तत्रोचे, भो भोः शृणु युधिष्ठिर!। ये ये मानभृतः शूराः, सत्यभाषासमन्विताः १५६
परदेशे परगृहे, नैव तिष्ठन्ति पण्डिताः। परभूमिगता नूनं, लघुत्वं ते भजन्ति च ॥ १५७ ॥
सूर्यमण्डलमासाद्य, चन्द्रोऽपि लघुतां व्रजेत् । तथा सभ्योऽपि गुणवान्, परगेहे लघुतां भजेत् ॥१५८॥
एवं ज्ञात्वा स्वचित्ते वै, गन्तव्यं च त्वयाऽऽमुतः। देशाद्वा भो मदीयाच्च, भ्रातृभिः सहितेन च १५९
युधिष्ठिरोऽपि तद्वाक्यम्, श्रुत्वा कर्णेऽतिशूलदम् । उत्थाय च ततो गन्तुं, प्रवृत्तस्तेजवर्जितः ॥ १६० ॥
द्रौपद्यपि ततो गन्तुं, प्रवृत्ता स्वामिपृष्ठतः। दुर्योधनोऽपि तां दृष्ट्वा, गच्छन्तीं पतिपृष्ठतः ॥ १६१ ॥
पापोपस्कृतचित्तेन, जगाद द्रौपदीं प्रति। हारिता त्वं हि पाञ्चालि !, मच्छुद्धान्तमलङ्कुरु ॥१६२॥
तस्य वाक्यं निराकृत्य, प्रवृत्ता गमनं प्रति । तदा दुष्टाशयस्तस्या, जग्राह वसनाञ्चलम् ॥१६३॥
अञ्चलेऽपि धृते साध्वी, न स्थिता गमनोत्सुका। चीवरं तु करे तस्याः, पापस्याऽपि समागतम् ॥१६४॥

परिधानवतीं दृष्ट्वा, पुनस्तेन दुरात्मना । प्रधाव्य याऽञ्चले धृत्वा, कृष्टा दुष्टेन सा सती ॥१६५॥
तथा पुनः समायातं, चीवरं पापचेतसः । एवं स सप्तवारांश्च, चक्रे दुष्टो दुराशयः ॥१६६॥
युधिष्ठिरो निजे चित्ते, किञ्चित्क्रोधं न भेजिरे। सती तु वस्त्ररहिता, न जाता शीलशक्तितः ॥ १६७॥
तदाऽमात्यैर्निषिद्धोऽसौ, रे रे दुष्ट ! दुराशयः। सत्येनां कोपयित्वा रे !, यासि किं यममन्दिरम् ॥१६८॥
तदा मुक्ता च दुष्टेन, द्रौपदी पतिरन्वगा । दृष्टा सर्वैस्तदा लोकैः, सती शीलसहायिनी ॥१६९॥
भीमसेनादयः प्रोचुः, शृणु भ्रातः ! वचोऽनघम्। हारिता हि त्वया पृथ्वी, वालयामो वयं रणे ॥१७०॥
युधिष्ठिरस्तदा प्राह, नैव युक्तं सुचेतसाम्। स्ववक्त्रनिर्गतं वाक्यम्, पालयन्ति मनीषिणः ॥१७१॥
या मया हारिता पृथ्वी, दत्ता दुर्योधनाय वै। सा कथं गृह्यते वत्स!, मया सत्यवता ध्रुवम् ॥१७२॥
निर्गता भ्रातरः सर्वे, त्यक्त्वा राज्यं तृणं यथा। द्युतव्यसनप्रभावात्, दुःखं सर्वशरीरिणाम् ॥१७३॥
पद्भ्याम् कृत्वा पुरे ते हि, गच्छन्तः पश्यतां सताम्। तदा लोकैर्महद्दुःखम, कृतं दृष्ट्वा तथाविधान्॥१७४॥
पञ्चाल्या सहितास्तेऽमी, पाण्डवाः सत्यसन्धयः। निर्गत्य नगराद्याताः, मन्दं मन्दं हतौजसः ॥ १७५॥
तदा लोकवचो जातम्, पश्यतां द्युतजं फलम्। इदृग्विधा महासत्त्वा, द्युतान्निर्घाटिताः पुरात् ॥१७६॥

पुरं त्यक्त्वा तु ये याताः, मन्दं मन्दं निजेच्छया। स्थाने स्थाने हि तिष्ठन्ति, द्रौपद्या वचनाऽनुगाः ॥१७७॥
क्वचित्सौख्यम् कचिद्दुःखं, कचिद्ग्रामः कचिद्वनम्। कचिद्भोज्यं कचिद्भिक्षां, कचिच्छय्यां कचित्स्थलम्
अनवारीत्पाताश्रूरागमन्तो दिवसान् बहून्। सुखं दुःखं न जानन्ति, धीराणां चेष्टितं खलु ॥ १७९॥
नानाऽरण्ये तथा देशे, पुरे खेटे यथासुखम्। भ्रमन्तस्तेऽनुभुञ्जन्तः, फलं द्युतसमुद्भवम् ॥१८०॥
गमयित्वा तु वर्षाणि, पाण्डवाः सुखदुःखतः। चिन्तन्तो द्युतजं कर्म, शूराः सत्यप्रतिज्ञकाः ॥ १८१ ॥
भ्रमन्तस्ते तु सम्प्राप्ताः, विराटपुटभेदकम्। पुरं लोकप्रसिद्धं हि, विराटो यत्र भूपतिः ॥१८२॥
तत्राऽगत्य कृतस्तैः हि, निवासः कृतवस्तुभिः। नानारूपधरा भूत्वा, मिलितास्तेऽथ भूपतिम् ॥१८३॥
ज्येष्ठोऽसौ वन्दिनो रूपम्, भीमो वै सूपकारजम्। अर्जुनश्चापि पण्ढस्य, सहदेवो ज्योतिषां वरः ॥१८४॥
नकुलोऽश्वपालने शक्तो, द्रौपदी पुष्पकारिका। एवं विधानि रूपाणि, नीत्वा मिलितास्तु भुभूजः ॥१८५॥
प्रत्यहं निजकर्माणि, कुर्वन्तेस्ते स्थितास्तदा। राज्ञः प्राणप्रिया जाताः, सर्वलक्षणसंयुताः ॥१८६॥
अथ भूपस्य तस्यैव, कीचको नाम शालिकः। मिलनार्थं समायातो, भगिन्या मोहितः स्थितः ॥१८७॥
तेन सा द्रौपदी दृष्टा, या वै पुष्पोपजीविका। तां दृष्ट्वा कामविशेषैः, पीडीतोऽसौ तु कीचकः ॥१८८॥

ता प्रति वक्रवाक्यैश्च, जगादेवमहर्निशम् । सा सती किन्तु नोचे तम्, लज्जापूरितचेतसा ॥१८९॥
नो तिष्ठते यदा दुष्टः, पृष्ठं नो त्यजते यदा। तदा तया समाख्यातम्, भीमसेनाय चेष्टितम् ॥१९०॥
भीमोऽपि द्रौपदीं प्राह, ननु भव्यं भविष्यति। नगरस्य बाह्यतो नूनं, वर्त्तते शिवमन्दिरम् ॥ १९१॥
तत्राऽयं कीचको दुष्टः, प्रतार्याऽऽनीयतां त्वया। तत्रैव दक्षिणां तस्मै, दास्यामि च तवाऽग्रतः॥१९२॥
भीमस्य वचनं नीत्वा, तं प्रत्यूचे च सा सती। नगराद्बाह्यदेशे तु, तत्र नौ सङ्गमो ध्रुवम् ॥१९३॥
तेन वाक्येन दुष्टात्मा, तुष्टचित्तस्तदाऽभवत्। शृङ्गारं विविधं नीत्वा, रात्रौ चैत्ये समागतः ॥१९४॥
तत्र भीमोऽपि पुर्वे हि, द्रौपदीवेषधारकः । स्थितः प्रच्छन्नवृत्या हि, तावत्तत्राऽऽगतः शठः ॥१९५॥
द्रौपदीमोहवशतो, न जानाति हिताऽहितम्। एकाकी चैत्यमध्येऽसौ, प्रविष्टो मन्मथाऽर्दितः ॥१९६॥
एहि ह्यालिङ्गनं देहि, द्रुतं पुष्पोपजीविके !। तव भाग्यवशान्नूनं, मे प्रीतिस्तु तवोपरि ॥ १९७॥
शृङ्गारान् विविधान् दास्ये, वस्त्रालङ्करणानि च । पट्टराज्ञीं करिष्यामि, तव मोहवशाऽनुगः ॥१९८॥
*भीमोऽस्य वचनं श्रुत्वा, द्रौपदीवेषधारिकः।जगौ सत्यं च हे नाथ!, त्वं मे भाग्यात् समागतः॥१९९॥

* एतद् पद्यं मत्यन्तरे नास्ति ।

दास्याम्यालिङ्गनं ते हि, मम मोहस्तवोपरि। तेन वाक्येन तुष्टोऽदादाऽऽलिङ्गनमनाकुलम् ॥२००॥
आलिङ्गनमिषेणैव, पीडितोऽगाद्विचेततां । चैतन्यं सः पुनः प्राप्य, नत्वाऽगाच्च ततो वनम् ॥२०१॥
वने निरञ्जने गत्वा, दुःखवैराग्यपूरितः । दीक्षां जग्राह जैनेन्द्रीम्, लोकद्वयसुखप्रदाम् ॥२०२॥
ततः प्रभातसमये, कीचकस्यैव सेवकाः । कीचकं नैव पश्यन्ति, पश्यन्तोऽपि दिशोऽखिलाः ॥२०३॥
विराटस्तैस्तु विज्ञप्तः, कारणं कीचकस्य हि । तदा भूपतिना तस्य, देशेऽथ प्रेषितो नरः ॥२०४॥
तेन गत्वा तु तत्रोक्तम्, नास्ति कीचकनामकः। तच्छ्रुत्वा तु समायाताः, भ्रातरः शतसङ्ख्यकाः॥२०५॥
पश्यन्तः सर्वतस्तेऽपि, पृच्छन्तो विविधान् जनान् । तत्र केनाचिदित्युक्तम्, दृष्टोऽसौ कीचको मया ॥२०६
चैत्यमध्ये प्रविष्टोऽत्र, युक्तः पुष्पोपजीवया। निर्गच्छन् मया दृष्टो, दृष्टा एकाकिनी च सा ॥२०७॥
तेन वाक्येन ते क्रुद्धाः, कीचकास्तां स्त्रियं प्रति। गमिष्यामोऽधुना दुष्टाम्, गतिभ्रातृनिषेविताम् ॥ २०८॥
चिन्तयित्वेति तां नीत्वा, गतास्ते नगराद् बहिः। चिताऽत्र रचिता तैश्च, द्रौपद्या दहनं प्रति ॥२०९॥
तावत् केनाऽपि तत्रैव, भीमाय तु निवेदितम्। पुष्पोपजीविका नूनं, दह्यते कीचकैर्बहिः ॥२१०
भीमसेनो द्रुतं तत्र, गत्वा पश्यति कीचकान्। निर्मिताऽत्र चिता तैस्तु, द्रौपदीदहनाय वै ॥ २११॥

तावद्वेगेन तान् नीत्वा, चिक्षेपाऽग्नौ दुरात्मकान्। भुजाभ्याम् धृत्वा धृत्वा, चितामध्ये निराकरोत्॥२१२॥
एकं मुमोच भीमोऽपि, कीचकं शतमध्यतः। खण्डयित्वाऽस्य रसनाम्, मूकोऽसौ नगरे गतः॥२१३॥
विराटस्य पुरो गत्वा, रसनाखण्डदोषतः। समस्यां कृतवान् मूको, भीमे तत्र स्थिते तदा॥२१४॥
विराटोऽपि जगादेवं, मूकोऽयं किं प्रभाषते। भीमोऽपि कथयामास, शृणु राजन्! कथयाम्यहम्॥२१५॥
यदेषो भाषते मूकस्तत्तेऽहं कथयामि वै। कीचकास्तस्य दुःखेन, प्रविशन्तोऽखिलाः चिताम्॥२१६॥
मयाप्येते निषिद्धास्तु, नैव तिष्ठन्ति कीचकाः। करोम्यहं कथं राजन्, कुर्वते ते न मे वचः॥२१७॥
विराटेन तदा ज्ञातम्, सत्यं वै भाषते ध्रुवम्। गतो दुःखान्निजं स्थानं, कीचको भ्रातृवर्जितः॥२१८॥
एवं तत्र स्थितास्ते वै, पाण्डवाः कान्तया युताः। तत्रैव गोग्रहं चक्रे, दक्षिणं चोत्तरं तथा॥२१९॥
नीत्वा द्वादशवर्षाणि, पाण्डवा द्वारिकां गताः। मिलित्वा वासुदेवस्य, दत्वा दुःखजलाञ्जलिम्॥२२०॥
सुभद्रा नामतो या हि, स्वसा कृष्णस्य विश्रुता। अर्जुनस्य च दत्ता सा, परिणीता नृत्यमोहतः॥२२१॥
दूतत्वं तु तदा चक्रे, कृष्णो दुर्योधनेन च। पाण्डवानां हितार्थाय, जातासन्धिस्तथापि न॥२२२॥
कौरवपाण्डववैरं हि, विख्यातं क्षितिमण्डले। कुरुक्षेत्रेऽतिरौद्रोऽभूत्, सङ्ग्रामः कौरवान्तकृत्॥२२३॥

जाते महति सङ्ग्रामे, जितं पाण्डोश्चपुत्रकैः। कौरवाना क्षयं चक्रे, कृष्णसान्निध्ययोगतः ॥२२४॥
तद्युद्धं भरते ख्यातम्, प्राप्तं राज्यं च पाण्डवैः। हस्तिनागपुरस्यैव, दत्तं कृष्णेन प्रीतितः॥२२५॥
इत्थं ते पाण्डवा राज्यं, कुर्वन्ति च निरङ्कुशम्। एकदा तत्र सम्प्राप्तो, नारदो मुनिपुङ्गवः ॥२२६॥
आगच्छन्तं मुनिं दृष्ट्वा, प्रहृष्टास्ते तु पाण्डवाः। अर्घपाद्यादिकं चक्रुः, नारदायाऽतिभक्तितः ॥२२७॥
क्षणमेकं तत्र स्थित्वा, कृत्वा क्षेमादिकां कथाम्। पश्चादुत्थाय यातोऽसौ, द्रौपद्या भवनोत्सुकः॥२२८॥
द्रौपद्यपि कृतस्नाना, निजनेपं च गृह्णती। आदर्शं चाग्रतः कृत्वा, पश्यन्ती रूपमात्मनः ॥२२९॥
नारदोऽत्र समायातो, नो दृष्टो व्यग्रचित्तया। तदा क्रोधभराऽऽक्रान्तो, निर्गतो भवनान्मुनिः॥२३०॥
कैलासशिखरे स्थित्वा, चिन्तां कर्तुं समुद्यतः। निजरूपस्य गर्वेण, मानितोऽहं न चाऽनया ॥२३१॥
तदेनां पापयुक्तां हि, वियुक्तां वै करोम्यहम्। विमृश्यैवं तदा यातः, कङ्कामरपूर्विकाम् ॥२३२॥
लिखित्वा तु पटे रूपं, द्रौपद्या लक्षणान्वितम्। दर्शितं पद्मराजस्य, चित्तचोरणकारणम् ॥२३३॥
तद्रूपं तु पटे न्यस्तम्, दृष्ट्वा पद्मः सविस्मयः। प्रपच्छ नारदं नत्वा, कस्येदं रूपमद्भुतम् ॥२३४॥
नारदः कथयामास, शृणु राजन्! मनोहरम्। रूपं पार्थप्रियाया वै, दुर्लभं क्षुद्रचेतसाम् ॥२३५॥

हस्तिनागपुरे चाऽस्ति, प्राप्येयं पुण्यतो ध्रुवम्। इत्युक्त्वा नारदे याते, चिन्तया पूरितोऽभवत् ॥२३६॥
साधयित्वा परां विद्याम्, रात्रौ सुप्तां स चाऽऽहरत्। आनयित्वा निजे गेहे, ऽस्थापयत् प्रेमपूरितः॥२३७॥
द्रौपद्यपि महद्दुःखम्, कृत्वा चित्ते जगाद तम्। मासमेकं प्रतीक्षस्व, पश्चात् ते रुचितं कुरु ॥२३८॥
इति श्रुत्वाऽथ पद्मोऽपि, स्थितो मासं विचिन्तकः। हृतायां हि प्रियायां तु, पार्थोऽसौ प्रतिबुद्धवान्॥२३९॥
त्रिया विरहितां शय्याम्, दृष्ट्वा दुःखमथाऽकरोत्। ततोऽपि पाण्डवाः, सर्वे विबुद्धाः दुःखपूरिताः॥२४०॥
द्वारिकायां ततो गत्वा, कृष्णाय विनिवेदितम्। कृष्णोऽपि चिन्तया ग्रस्तः, बभूव श्रवणादपि ॥२४१॥
तावत्तत्र समायातो, नारदो नामको मुनिः। सर्वान् चिन्तातुरान् दृष्ट्वा, पृष्टवान् कारणं मुनिः ॥२४२॥
ततः सर्वेऽपि ते प्रोचुः, शृणु नारद! महामुने!। द्रौपदी च हृता केन, ज्ञायते नहि सर्वथा ॥२४३॥
नारदोऽपि तदा प्राह, श्रूयतां पाण्डवोत्तमाः। हृता साऽमरकङ्कायाम्, द्वीपे धातकीनामनि ॥२४४॥
पद्मेनाऽपि हृता नूनम्, वर्त्तते तस्य वेश्मनि। समुद्रमन्तरे तस्य द्वीपस्य, वर्त्तते ध्रुवम् ॥२४५॥
इत्युक्त्वा नारदो यातो, विष्णुः चिन्तामुपागतः। सर्वसाधनसंयुक्तस्तटेऽगात् सागरस्य हि ॥२४६॥
तटे मुक्त्वाऽथ तं सैन्यम्, पञ्चपाण्डवसंयुतः। रथं नीत्वाऽर्णवं तीर्त्वा, गतो द्वीपान्तरं क्षणात् २४७

घातकीद्वीपमासाद्य, ततस्तां नगरीं गतः । गत्वा कस्याऽपि हस्तेन, पद्माय सोऽकथापयत् ॥ २४८॥
सर्वसाधनसंयुक्तो, पद्मोऽसौ निर्गतो बहिः । पाण्डवैश्च समं जातम्, युद्धं तस्य महीभुजः ॥२४९॥
हतं तु तत्क्षणात्सैन्यं, पाण्डवैस्तु पलायितम् । कृष्णेन पादघातेन, कम्पितं भुवनं तदा ॥२५०॥
लोकास्तु व्याकुलाः सर्वे, सञ्जाता क्षणमात्रतः । पद्मोऽपि द्रौपदीं पादौ, नत्वा दीनवचोऽवदत् ॥ २५१॥
मातस्त्रायस्व त्रायस्व, त्वं मे माता न संशयः । तेनैव दीनवचसा, द्रौपदी कृपयाऽन्विता ॥२५२॥
प्रोचे पद्मं च हे वत्स !, स्त्रीरूपं त्वं गृहाण भोः । स्त्रीरूपधारणं नीत्वा, बाह्ये स्त्रीवृन्दसंयुता ॥२५३॥
निर्गता द्रौपदीवेगान्मिलनार्थं निजस्वामिनाम्। आगच्छन्तीं द्रौपदीं वीक्ष्य, कृष्णः शान्तिमुपागतः॥२५४
पतिता स्वामिनोः पादौ, ज्येष्ठयोरुभयोरपि । पद्मोऽपि पातितस्तस्य, कृष्णस्य पदपद्मयोः ॥२५५॥
कृता कृपा तु कृष्णेन, तस्य स्त्रीवेषधारिणः । नगराऽभ्यन्तरे नीताः, कृत्वाऽतिविनयं महान् ॥२५६
मम भाग्योदयो जातः, श्रीमतां दर्शनेन वै । नगरस्योत्सवतां चक्रे, पद्मो हर्षेण पूरितः ॥२५७॥
द्रौपद्याः पारणं जातं, प्रतिज्ञापूरणं कृतम् । सप्तैव दिवसान् स्थित्वा, निर्गतास्ते निजाऽऽस्पदम् ॥२५८॥
समुद्रस्य तटे गत्वा, पाञ्चजन्यमपूरयत् । विष्णोश्च शङ्खनिनदं, श्रुत्वा कोलाहलोऽभवत् ॥२५९ ॥

तत्रत्यजिननाथस्य सदसिस्थो जनार्दनः । शङ्खनादं पराविष्णोश्चितेऽत्यन्तं चमत्कृतः ॥२६०॥
प्रपच्छ जिननाथं तं, नाथ! नादोऽत्र कस्य वा। जिननाथोऽपि तत्रोचे, शृणु तुभ्यं कथयाम्यहम्॥ २६१॥
जम्बुद्वीपस्य भरते, द्वारिका प्रथिता पुरी। तस्याः प्रभुरयं विष्णुस्तस्य शङ्खरवो ध्रुवम् ॥२६२॥
किमर्थं त्वत्र सम्प्राप्तः, केन वा कारणेन च। पद्मेनैव हृता नारी, पार्थस्यानुजस्य च ॥२६३॥
नारायणोऽपि रुष्टस्तं, पद्मं निर्घाटयत्पुरात्। जगाद जिननाथं, संमिलाम्यस्मै विभोरहम् ॥२६४॥
जिनेन्द्रेण निषिद्धोऽसौ, ते युक्तं मिलनं नहि। जिनेन्द्राश्चक्रवर्त्तिनो, बलिनो वाऽथ विष्णवः ॥२६५॥
प्रतिविष्णवोऽपि ये ख्याताः, तेषां च मिलनं नहि। परस्परे तु मिलने, काचिद्वा स्यात्स्वहीनता ॥२६६॥
अत एव त्वया राजन्!, कर्त्तव्यं भक्तिभोजनम्। ध्वजाग्रदर्शनेनैव, शङ्खनादेन वाऽमिलः ॥२६७॥
तथैव च कृतं तेन, जिनेन्द्रवचनं वरम्। सन्तोषं परमं प्राप्य, कृष्णोऽपि च तथाऽकरोत् ॥२६८॥
स्थित्वाऽत्र क्षणमेकं स, जगाम निजलीलया। तथैवोत्तीर्य जलधिं, स्मृत्वा वै वारुणासुरम् ॥२६९॥
क्रमेणाऽपि हि गच्छन्तो, निजद्वीपं समागताः। रथादुत्तरिताः एते, प्रसिद्धाः पञ्चपाण्डवाः ॥२७०॥
द्रौपदीसहितो विष्णुः, रथारूढोऽपि पृष्ठतः। आगच्छति यावत्तावत्पाण्डवाश्चाग्रतो गताः ॥ २७१॥

अग्रे सुरनदीं दृष्ट्वा, नावं नीत्वा च पाण्डवाः । क्षणादुत्तीर्य तं नावं, जले गुप्तं कृतं शठैः ॥२७२॥
गङ्गामुत्तीर्य कुटिला, दूरं गत्वा स्थिताश्च ते। विलोक्यते कथं कृष्णो, जाह्नवीं सरथस्तरेत् ॥२७३॥
कृष्णोऽपि पृष्ठतस्तेषां, समागत्य विलोक्य च । यदा न पाण्डवा दृष्टाः, तथोत्तरद्रथादसौ ॥२७४॥
रथं वामकरे धृत्वा, द्रौपदीसहितं तथा । दक्षिणेन करेणैव, लीलया जाह्नवीं तरन् ॥२७५॥
तीर्त्वा गङ्गां यदा कृष्णो, बाह्ये गन्तुं समुद्यतः। तदा तैः पाण्डवैः मूढैर्हास्यादुडुपः दर्शितः ॥२७६॥
अहो शक्तिरहो धैर्यं, कृष्णस्य मानुषाऽतिगम्। उत्तीर्णो येन गाङ्गेयं, कराभ्यां बलशालिना ॥२७७॥
पुनः पुनः प्रशंसाति, यदा ते पाण्डुनन्दनाः । तदा कृष्णोऽपि तान् रुष्टो, जगाद दुष्करं वचः ॥२७८॥
रे रे कुपाण्डवा दुष्टाः, हास्यं किं नु मया सह । ममाऽपि पौरुषं दृष्टं, भवद्भिरधुनैव हि ॥२७९॥
प्रथमं निहतः कंसः, शिशुपालो तथैव हि । जरासन्धो महाशुरो, ये ये चान्ये महीभृतः ॥२८०॥
भवद्भिस्ते न किं ज्ञाताः, ये ये मया निहताः पुरा। हास्यं कर्तुं समारब्धं, यतो वै पाण्डुनन्दनाः ॥२८१॥
गोवर्द्धनोद्धृतः पूर्वं, धेनूनां रक्षणे पुरा । प्रविश्य यमुनामध्ये, फणीन्द्रो नाथितो मया ॥२८२॥
कोटिशिला यदोत्क्षिप्ता, तीर्णोऽयोऽहं महाम्बुधिः । द्रौपदी वालिता येन, जित्वा पद्मं नराधिपम् ॥२८३॥

तस्य मे हि नदीमात्रे, तरणे नैव पौरुषम्। व्याख्यातं किं तु हास्येन, रे रे दुष्टाः कुपाण्डवाः ॥२८४॥
सिंहस्य मृगाघातेन, पौरुषं किं हि शस्यते। अतिरुष्टस्तदा कृष्णो, हास्यं वै खास्यतां गतम् ॥२८५॥
अहो हास्यं न कर्त्तव्यम्, हास्यं प्रीतिविनाशकम्। हास्येन गर्गता नूनं, समेति निपुणेऽपि हि॥२८६॥
यत्र मे मेदिनीराज्यं, न स्थातव्यं तु पाण्डवैः। भवतां तु ममाऽऽज्ञाऽस्ति, नियमोऽस्ति मम रक्षणे॥२८७
इति कृष्णवचः श्रुत्वा, मानभ्रष्टास्तु पाण्डवाः। नत्वाऽस्य पादयोर्याताः, पाण्डवा दक्षिणां दिशिम् ॥२८८॥
तत्र दक्षिणमथुरा, स्थापितास्तैस्तु पाण्डवैः। निजपुण्यप्रभावेन, सर्वत्र सुखिनां सुखम् ॥२८९॥
द्युतस्य व्यसनात्पूर्वं, प्राप्ता दुःखं सुदारुणम्। तस्यैव पापतो यातास्त्यक्त्वा देशं विदेशकम् ॥२९०॥
नास्ति द्युतसमं पापं, नास्ति द्युतसमो रिपुः। पाण्डवाः प्रौढपूण्याश्च, प्राप्ताः दुःखं तु द्युततः ॥२९१॥
पश्य श्रेणिक! भूपाल!, पाण्डवाश्चण्डतेजसः। द्युतस्य व्यसनेनैव प्राप्तं दुःखं सुदारुणम् ॥२९२॥
अन्ये नलादयो भूपाः, बहवो दुःखमुल्बणम्। प्राप्ता द्युतफलेनैव, कस्तां हि वदितुं क्षमः ॥२९३॥
द्युतं हिंसाकरं लोके, द्युतं कूटप्रभापितम्। द्युतेन चौर्यभावोऽपि, द्युताद्दुःखं नृणां खलु ॥२९४॥
द्युतं हि सर्वथा त्याज्यम्, प्राज्ञैर्बुद्धिविशालिभिः। नरकं प्राप्यते द्युताद्, द्युतात् तिर्यञ्चता भवेत्॥२९५॥

एकया जिह्वया दुःखं, प्रोच्यते द्युतजं फलम् । अतो वै सर्वथा त्याज्यम्, द्युतं संसारवर्द्धनम् ॥२९६॥
पञ्चैते पाण्डुपुत्रा क्षितिविदिततया द्युतक्रीडावशेन प्राप्ता वै दुःखमुग्रं विविधजनपद देशनाशं तथैव ॥
ज्ञात्वैवं भव्यजीवैः नरककरमघं द्युतमेवाऽत्रत्याज्यम् सेव्योऽयं जैनधर्मो विविधसुखमहासागरे सोमसप

॥ इत्याचार्य श्रीसोमकीर्तिविरचिते सप्तव्यसनकथासमुच्चये द्युतव्यसनकथाफलवर्णनो नाम प्रथमः सर्गः ॥

॥ सप्तव्यसनकथासमुच्चये ॥

# मांसभक्षणोपरि बककुमारकथानकम् ।

अथ श्रेणिकभूपोऽपि, प्रपच्छ गणनायकम् । पलास्वादनजं दुःखम्, प्राप्तं केन कथं पुनः ॥१॥
जगाद गणनाथस्तु, शृणु श्रेणिक ! कथ्यते । पलाशनेन येनाऽऽप्तं, दुःखं संसारकारकम् ॥२॥
बको नामाऽथ दैत्योऽसौ, जातो भूपालनन्दनः । तेनाप्तं विविधं दुःखं, संसारपरिवर्द्धकम् ॥३॥

नाथ! कोऽत्र वको नाम, सुतो वा कस्य भूभृतः। कथं मांसस्य दोषोऽभूत्, प्राप्तो दुःखं कथं च सः ॥४॥
इति पृष्टो गणाधीशो, जगादेनं नराधिपम्। भव्यं पृष्टं हि भूपाल! लोकानां हितकारणम् ॥५॥
जम्बुद्वीपेऽत्र भरते, क्षेत्रे देशे मनोहरे। कुशाग्रनगरे रम्ये, भूपालो नाम भूपतिः ॥ ६ ॥
तस्या अस्ति महिषी रम्या, सती गुणविशारदा। लक्ष्मीमत्यभिधा भाति, कलागुणविभूषिता ॥७॥
वको नामाऽस्ति पुत्रोऽस्य मांसव्यसनलालसः। राजाऽसौ जिनधर्मस्य, पालने निपुणोऽभवत् ॥८॥
प्रतिवर्षे समायाति श्रीनन्दीश्वरजं व्रतम्। अष्टाह्निकात्रयाणां हि, भवत्येवोत्सवः पुरे ॥ ९ ॥
भूपोऽपि घोषणां ग्रामे, कुरुते लोकविश्रुताम्। यो हिंसामत्र कुरुते, राजद्रोही नरः खलु ॥१०॥
तदा पुत्रेण भूपोऽपि, प्रोक्तोऽतिविनयेन च। स्थास्याम्यहं कथं तात!, मांसेन परिवर्जितः ॥११॥
पुत्राग्रहेण भूपेन, प्रोक्तं तं नन्दनं प्रति। एक एव त्वया हिंस्यो, जीवो मांसप्रियेण हि ॥१२॥
द्वितीयस्यापि जीवस्य, हिंसने नियमस्तव। प्रतिपन्नं हि पुत्रेण, तातस्य वचनं वरम् ॥ १३ ॥
अनया प्रतिपत्त्या हि, पुत्रस्तिष्ठति सर्वदा। अन्यः कोऽपि न कुरुते, हिंसामष्टाह्निकादिने ॥१४॥
अष्टाह्निकायां एकस्यां, सूपकारेण निर्मितम्। पिशितं पुत्रप्रियं तत्र, बाह्ये मुक्त्वाऽन्तरे गतः ॥१५॥

गतेऽथ सूर्पकारेऽस्मिन्, तं विडालोऽपि चाऽहरत्। हृतं द्रुतं तदा मासं, दृष्ट्वा सोऽपि व्याचिन्तयत् ॥१६॥
किं करोमि! क्व गच्छामि, दास्यामीति किमुत्तरम्। राजपुत्रोऽतिमांसार्त्तो, निग्रहं मे करिष्यति ॥
इति चिन्तातुरो भूत्वा, नगराद्वाह्यतो गतः। गत्वा व्यलोकयत्तत्र, ददर्श मृतकं शिशुम् ॥१८॥
निहितं भूमिमध्ये तमुपरिस्थितधूलिकां। पितृभिस्तत्क्षणात्क्षितम्, दृष्टं सूर्पकृता तदा ॥१९॥
खनित्वाऽनीय तं बालं, संस्कृत्य विधिपूर्वकम्। स्थापितं पूर्वविधिना, तेन सूर्पकृता तदा ॥२०॥
आयातो नृपतेः सूनु र्भोजनार्थं यदा तदा। पूर्ववत्सूर्पकारेण, भक्तिस्तस्य कृता घना ॥ २१ ॥
सुतो राज्ञः, भोजनार्थं हि पूर्ववत्। मुञ्चितं विविधं चान्नं, व्यञ्जनादिभिः संयुतम् ॥२२॥
च पलम्, भुक्तं तेनैव पूर्ववत्। अपूर्वस्वादुकृतं ज्ञात्वा, पृष्टस्तेनाऽपि पूर्ववत् ॥२३॥
न ममाऽप्येवम्, सत्यं त्वं हि यथास्थितिम्। कस्येदं मांसमनघं, भुक्तं पूर्वं मया न हि ॥२४॥
जगाद सूर्पकारोऽपि, मासेदं हि मयुरजम्। राजपुत्रस्तदाऽप्युचे, भुक्ताः पूर्वं मयुरकाः ॥ २५ ॥
दृशः कोऽपि, न दृष्टो न श्रुतो मया। शपथैः श्रावितस्त्वं हि, सत्यं मे कथयस्व भोः ॥२६॥
न्तं सर्वं मया तव। कस्येदं स्वादुकृन्मांसं, सत्यं मे त्वं निरूपय ॥ २७ ॥

सूर्प्पकारस्तदा प्राह, शृणु ते कथयाम्यहम्। इदं वै मानुषं मासं, मयाऽऽनीतं भयात्तव ॥२८॥
कुमारोऽपि तदा प्राह, शृणु भो! सूर्प्पकारकः। त्वया, अद्यप्रभृतिस्तु पलं मानुषसम्भवम् ॥२९॥
येन केनाऽप्युपायेन, नेतव्यं मम तृप्तये। विलोक्यते तु यद्द्रव्यम्, तद्द्रव्यं नीयतां मम ॥३०॥
ततो भूपवचः श्रुत्वा, सूर्प्पकारः स्वमानसे। स चिन्तां विविधां चक्रे, मांसस्यानयनं प्रति ॥३१॥
चणकाश्च ततो नीता, मोदकाश्च मनोहराः। खर्ज्जुरो नालिकेरस्य, खण्डास्तेन हृता घना ॥३२॥
सन्ध्यावसरे सोऽपि, चत्वरे जनवर्जिते। बालानां क्रीडनस्थाने, यात्यसौ प्रत्यहं तदा ॥ ३३ ॥
ददाति बालकानां च, लोभने सुखभक्षिकाः। सर्वे ते बालकास्तस्य, समीपे यान्ति मोहतः ॥३४॥
सर्वेषां चाऽत्र मोहानाम्, मोहो वै खादनोद्भवः। स्वार्थकार्यं परित्यज्य, न कोऽपि कस्यचित्प्रियः॥३५॥
इतस्ततो विलोक्याऽसौ, बालं संगृह्य वेगतः। गलस्य मोटनं कृत्वा, कुक्षौ धृत्वा समेति सः ॥३६॥
*अनया रीत्याऽथ कालो, यातो जानाति नो यदा। राजाऽसौ जिनदीक्षां तु, नीत्वा याति तपोवनम्॥३७
गते राजनि पुत्रोऽपि, राज्यं चक्रे निरङ्कुशः। तथैव कारयत्येवम्, मांसं भक्षति मानवम् ॥ ३८ ॥

* एतत् पद्यं मत्यन्तरे नास्ति

यातिकाले तदा तस्मिन्, वालकाना क्षयोऽभवत्। तदा लोका विमृश्यन्ति, प्रत्यहं विस्मयाऽऽकुलाः। ३९
स्थित्वा प्रच्छन्नभावेन, स्थिता यावज्जना इमे। तावत्सोऽपि समायातः, सुर्प्पकारोऽपि दुष्टधीः ॥४०॥
दत्त्वा वेगेन तेनैवम्, वालानां सुखभक्षिकाम्। नीत्वा वालं तदा कुक्षौ, धृत्वा गन्तुम् समुद्यतः ॥४१॥
तावल्लोकैः प्रधाव्याऽसौ, धृतो कण्ठेऽथ सूर्प्पकृत्। वालः कण्ठगतप्राणः, पपात क्षितिमण्डले ॥४२॥
दृष्ट्वा तु पतितं वालम्, लोकाः क्रोधेन पूरिताः। प्रवृत्ता दक्षिणां दातुम्, लुष्ठमुष्ठादिभिस्तदा॥४३॥
ताडयित्वाऽथ तं दुष्टम्, प्रष्टुम् लोकाः समुद्यताः। तदा तेनैव तं सर्वम्, वृत्तान्तम् प्रतिपादितम् ॥४४॥
राज्ञो दुश्चरितं ज्ञात्वा, मिलितास्ते तदाऽखिलाः। लोकाः मन्त्रपरं चक्रुः, कर्तव्यं भूमिपाय कम् ॥४५॥
यो वै भक्षति वालानाम्, प्रजानां प्रत्यहं नृपः। तत्र वासोऽपि नो युक्तो; वासरैः कोऽपि नो ध्रुवम् ॥४६॥
तेन राज्ञा नु किं साध्यम्, यो वा भक्षति वालकान्। वालकानां तु नाशे हि, पितॄणां जीवितेन किम् ॥४७॥
याति देशं विदेशं वा; लोको वालैश्च वेष्टितः। वालानां जीवनार्थाय, वालका गृहमण्डनम् ॥ ४८ ॥
वालानां यत्र नाशः स्यात, तत्र वासो न युज्यते। धनधान्यादिकं सर्वम्, सञ्चयते सुतहेतवे ॥ ४९॥
तेषां तु यत्र नाशः स्यात्, तत्र वासं न कारयेत्। तत्र वासकृते नूनम्, विनाशो जायते नृणाम् ॥५०॥

तेन किं भूभुजा साध्यम्; यो वै भक्षति बालकान्। मिलित्वा तु जनैः सर्वैः निश्चयोऽयं कृतस्तदा ॥५१॥
निष्काश्यो भूपतिर्देशात्, दुराचारोऽतिपापकृत्। प्रत्यहं बालहिंसां यः, कृत्वा भक्षति बालकान् ॥५२॥
स्थाप्यते स कथं राजा, नतिर्वा क्रियते कथम्। एवं विमृश्यतां तेषाम्, प्रभातसमयोऽभवत् ॥५३॥
प्रभातसमये जाते, मिलितोऽसौ महाजनः। गत्वा तु राजभवनम्, सदसि स्थं नराधिपम् ॥५४॥
सर्वैर्लोकैर्गले धृत्वा, राज्याद्भ्रष्टो नृपः कृतः। दायादस्थापितो राज्ये, बहूनां हि मतं प्रमा ॥५५॥
स राजा स च देवो वा, स्थापितो यो महाजनैः। महाजनोऽथ स्वयं रुष्टो, दैवस्तस्य पराङ्मुखः ॥५६॥
न्यायमार्गप्रवृत्तानाम्, नूनं सर्वोऽपि सज्जनः। अन्यायपथि वृत्तस्य, सज्जनो दुर्जनायते ॥ ५७ ॥
कर्तव्यं न कदाचिच्च; न्यायमार्गोपलङ्घनम्। अन्यायमार्गरक्तानाम्, सुखं स्वप्नेऽपि दुर्लभम् ॥५८॥
अथ यो सौ वको नाम, राज्यभ्रष्टो महीतले। दुःखेन भ्रममाणोऽपि, विचरत्येव पापतः ॥५९॥
मानुष्याणां तु यो मांसे, रक्तोऽभूत् पापयोगतः। त्यक्तुं नैव समर्थोऽसौ, दुस्त्यजं व्यसनं खलु ॥६०॥
पुराद्बाह्यवने तिष्ठन्, वसंश्च पितृवेश्मनि। शवानां भक्षणं कुर्वन्; विचरत्येव प्रत्यहम् ॥६१॥
न कोऽपि नगरे तस्य, प्रवेशान् ददते यदा। तदा बहिर्वने स्थित्वा, भक्षयत्येव मानुषान् ॥६२॥

तस्यैव च भयात् त्रस्थो, वाह्ये कोऽपि वसेन्नहि । नक्तंचरविचारेण, जातो नक्तंचरः स तु ॥ ६३ ॥
केचिन्नणन्ति दैत्योऽयम्, राक्षसोऽयं निशाचरः । सिद्धः किन्नर–गन्धर्व–पिशाचोऽयं विशेषतः ॥६४॥
यन्त्रहीनोऽपि सो जातो, भ्रमत्येव वने वने । लोकानां भक्षणं कुर्वन् , दुष्टचित्तो वनेचरः ॥ ६५॥
पापे तु रक्तचित्तानाम्, न घृणा न कृपा कदा। लोकेऽपि निन्धमानोऽसौ, नित्यं भ्रमति भूतलम् ॥६६॥
एवं गच्छति कालेऽसौ, ग्रामे ग्रामे परिभ्रमन् । यथाऽग्रे संस्थितस्याऽपि, कुर्वन् जीवस्य भक्षणम् ॥६७॥
जीवमार्ये रतानां हि, न शङ्का, न विचारिता । महामांसवलेनैव, बकोऽसौ राक्षसोऽभवत् ॥ ६८ ॥
एकदा तु वने तिष्ठन्, वसुदेवेन निरीक्षितः । भ्रमंश्च हिण्डयन् वृत्या, वीरेणैकाकिनाऽपि सः॥६९॥
युद्धं तेन समं कृत्वा, राक्षसोऽसौ निपातितः । मृत्वा तु नरके जातः, सप्तमे घोरवेदने ॥ ७० ॥
तत्रैव हि महादुःखम्, भुङ्क्तेऽसौ पापजं फालम् । छेदनं भेदनं चापि, ताडनं दुःप्रवादनं ॥७१॥
नरके विविधं दुःखम्, सप्तमे तु विशेपजम् । भुङ्क्ते पापवशात्प्राणी, निवृत्तिर्नो लभेत् क्वचित् ॥ ७२॥
तत्रत्यो ब्रुवते प्राणी, क्षुधया पीडितोऽस्म्यहम् । छित्वा चाऽस्य शरीरं हि, दहन्ति नारकाः सुराः॥७३॥
तदा स ब्रुवते प्राणी, क्षुधा मे साम्प्रतं गता । दैत्यैः प्रचार्यते सोऽपि, रे रे पाप ! दुरात्मकः॥७४॥

परमांसानि भुक्तानि, विविधानि पुरा भवेत्। इदं ते हि शरीरोत्थं, कथं नो भुज्यते त्वया ॥७५॥
पच्यते पावके पापैः, पील्यते तिलवत् खलैः। दह्यते दहने रौद्रे, नरके घोरवेदने ॥ ७६ ॥
पश्यन्तु मांसजं पापम्, भुक्तं यच्च बकेन वै। इति ज्ञात्वा सदा त्याज्यं, पलं पापकरं नृभिः ॥७७॥
न पलं जायते वृक्षात्, न भूम्यां नैव पर्वते। जन्तूनां घाततो नूनं, पलं भवति निश्चितम् ॥७८॥
इति ज्ञात्वा कदाचिन्न, मांसे चिन्तां न कारयेत्। उत्सृष्टे जठरोद्भूते, विण्मूत्रमलाऽऽविले ॥७९॥
अजानां शूकराणां च, मृगाणां जलचारिणाम्। श्वानगर्दभसर्पाणाम्, मांसे नास्ति विचारणा ॥८०॥
विनष्टे तु शरीरे तु, पाकं भवति मांसकम्। यस्य गन्धे समायाते, मुखान्निष्ठीवनं भवेत् ॥८१॥
स्पर्शनं नैव युक्तं हि, मांसभक्षणकारिणाम् ॥८२॥
तत्पलं तु कथं सन्निर्मोही स्यादिह भूतले। इहलोकेऽप्यशुचिता, परलोके नरके व्रजेत् ॥८३॥
कुलशीलवता तस्मान्मांसं त्याज्यं सदैव हि। यत्र कुले क्षत्रियाणां हि, यत्र वा मानुषभक्षणं। राज्यभ्रंसादिजं दुःखम्, प्राप्तं तेनाऽपि श्वभ्रजम् ॥८४॥
अन्यः कोऽपि नरो लोके, मांसचिन्तां करिष्यसि। बकवद् दुःखमासाद्य, श्वभ्रे याति सुनिश्चितम् ॥८५॥
ये येऽत्र मांसजा दोषाः, कस्तौंस्तु वदितुम् क्षमः। अन्तरायं भवत्येव, भोजने यस्य नामतः ॥८६॥

निन्द्यं पापकरं परं शुचिहरम्, दुःखस्य मुलं पलम् । त्याज्यं भव्यजनैर्विवेकसहितैर्लोकद्वये निन्दितम् ८७
जैनं सर्वसुखाकरं शुचिकरं हिंसाहरं निर्मलम् । कर्तव्यं मुनिभाषितं तमहरं सोमेव धर्म्मं सदा ८८

॥ इत्याचार्य श्रीसोमकीर्तिविरचिते सप्तव्यसनकथासमुच्चये मासफलवर्णनो नाम द्वितीयः सर्गः ॥

॥ सप्तव्यसनकथा समुच्चये ॥

# ॥ सुराव्यसनविषये यादवकथानकम् ॥

अथोनेऽसौ गणाधीशः, शृणु श्रेणिक! कथ्यते । सुराव्यसनसम्भूता, कथा लोकहितावहा ॥१॥
सुरादोषेण सम्प्राप्तम्, यादवैः दुःखमुत्कटम् । कथयामि विशेषेण, शृणु चैकाग्रमानसः ॥ २ ॥
श्रेणिको मुनिनाथं तं, जगादेवं सुभक्तितः। कथयस्व विभो! मह्यम्, चरितं पापनाशनम् ॥३॥
जगादसौ गणाधीशो, द्वीपे जम्बूपलक्षिते। क्षेत्रे तु भरते देशः, कुशेटो विदितो भुवि ॥ ४ ॥
तत्र सौरीपुरं नाम, प्रसिद्धं पत्तनं भुवि । दशार्हाणां हि यो मुख्यः, समुद्रविजयो नृपः ॥ ५ ॥

तस्यानुजो वसुदेवः, ख्यातोऽसौ क्षितिमण्डले। कंसेन मथुराऽऽनीतो, दत्त्वाऽसौ भगिनीं निजाम् ॥६॥
कंसे राज्यं तु कुर्वाणे, तस्य भ्राताऽनुजो मुनिः। अतिमुक्तकनामा यो, चर्यायार्थं समागतः ॥७॥
समागतं मुनिं दृष्ट्वा, स्थापयित्वा यथाविधि। नीलंयशाऽभिधा या हि वर्त्तते महिष्यमिमा ॥ ८॥
हास्यं कर्तुं समारब्धम्, तया तं देवरं प्रति। देवक्यानन्दकं वस्त्रं, दर्शितं मुनये तदा ॥ ९ ॥
या बाल्ये तु त्वया भुक्ता, देवकी तेऽतिवल्लभा। तस्या इदं तु त्वं विद्धि वस्त्रमानन्दकं मुने। ॥१०॥
तं वस्त्रं तु मुनिर्दृष्ट्वा, चेतसा क्रोधदीपितः। शुच्स्थाने कथं हर्ष—माप्ता मूढे ! मुनिर्जगौ ॥११॥
अस्या गर्भेण ते तातो, मरणं याति निश्चितम्। भर्ता च ते तु कंसोऽपि, तेनैव च तथैव हि ॥१२॥
अन्तरायं ततः कृत्वा, स्थाने यातो मुनीश्वरः। नीलंयशा परं दुःखम्, प्राप्ता श्रुत्वा मुनेर्वचः ॥१३॥
तावत्कंसो निजे गेहे, भोजनार्थं समागतः। तावद् रुदन्तीं तां दृष्ट्वा, प्रपच्छ प्राणवल्लभाम् ॥१४॥
कथं रोदिषि हे देवि !, केन वा दुःखिता परम्। तदा जगाद सा जाया, शृणु मे दुःखकारणम् ॥१५॥
नाथाऽद्याऽसौ समायातो, योऽतिमुक्तकनामक। देवक्यानन्दवस्त्रं तु, दर्शितं मुनये मया ॥१६॥
तं यस्त्रं मुनिरालोक्य, सञ्जाता क्रोधदीपितः। जगावेवंविधां वाणीं, मम दुःखकरां परां ॥१७॥

शुचस्थाने कथं प्राप्ता, हर्षे मूढे! यतः शृणुः। अस्य गर्भेण ते तातः, पतिश्चापि मरिष्यति ॥१८॥
इत्युक्त्वाऽसौ गतोऽरण्ये, चान्तरायवशान्मुनिः। तस्य तं वचनं श्रुत्वा, सञ्जाताऽस्मि दुःखविक्लवा ॥१९॥
तेन वाक्येन कंसोऽपि, जातश्चिन्तातुरस्तदा। सर्वेषां हि भयानां तु, भयं मरणस्य दुस्सहः ॥२०॥
चिन्तां कृत्वा तदा यातो, वसुदेवगृहं वरम्। वसुदेवोऽपि कंसस्य, करोदर्घादिकां क्रियाम् ॥२१॥
प्रीतिशार्तां परां चक्रे, कौटिल्येन युतो हृदि। अवसरं समासाद्य, वसुदेवं वचो जगौ ॥ २२॥
मे हि सर्वविद्यासु, गुरुरेव न संशयः। तस्मात् किञ्चिदहं याचे, यदि वा दीयते त्वया ॥२३॥
सुदेवस्तदा प्राह, शृणु कंस! विचक्षणः। मया कदापि नो चक्रे, वाक्यं ते भाषसेऽधुना ॥२४॥
अद्यप्रभृति सद्वाक्यं, मया नोल्लंघितं तव। एवंविधाऽऽग्रहः कस्मात्क्रियते हे नराधिप! ॥२५॥
प्रत्युत्तरं तदा प्राह, कंसोऽपि वदतां वर!। दीयतां पूगमेवाऽत्र, याच्यते च ततो मया ॥२६॥
दत्ते पूगे तु कंसेन, याचितं वरमुत्तमम्। भविष्यस्येव देवक्याः, प्रसूतिश्च गृहे मम ॥ २७ ॥
वसुदेवस्ततोऽवादीत्, शृणु कंस! वचो मम। त्वत्भगिन्याश्च देवक्याः, दूषणं ते गृहे तु किम्॥२८॥
सम्भाष्य, नीत्वा पुगं गतो गृहे। कृतार्थोऽसौ ततश्चित्ते, मानयन् जीवितं निजम् ॥२९॥

वसुदेवाय तत्रोक्तं, केनाऽपि हितकारिणा। कंसेनाऽग्रहतो नीतं, युगं तस्यैव कारणम् ॥ ३० ॥
तद्वृत्तान्तं ततः श्रुत्वा, वसुदेवः स्वमानसे। देवक्या सहितो दुःखं, चकारात्यन्तविह्वलः ॥ ३१ ॥
देवक्या सहितस्तत्र, रथस्थोऽसौ वने गतः। वन्दयित्वा मुनिं भक्त्या, निविष्टो मुनिरग्रतः ॥३२॥
धर्मं श्रुत्वा मुनिं नत्वा, कृत्वा च करसम्पुटम्। प्रपच्छैवं स्वचिन्तायाः, कारणं दुःखसम्भवम् ॥३३॥
नीलंयशायाः पुरतः, किमुक्तं भवता प्रभो!। तत्सर्वं त्वमाख्याहि, नाऽन्यथा मुनिभाषितम् ॥३४॥
जगाद मुनिनाथोऽसौ, शृणु भूप कथानकम्। उत्पत्स्याति देवक्यां, पुत्रयुग्मत्रयं ध्रुवम् ॥ ३५ ॥
तस्मिन्नेव हि प्रस्तावे, कौशाम्ब्यां श्रेष्ठिनो गृहे। वृषभस्य च जायायां, सैषा माता पुरातनी ॥३६॥
मृतं युग्मं त्रयं सा तु, प्रसवष्यत्यसंशयम्। तदा देवाः समानीय, करिष्यन्त्यत्र व्यत्ययम् ॥३७॥
पुत्रास्ते ते भविष्यन्ति, ध्रुवं चाऽन्यशरीरकाद्। दुःखं त्वं हृदये भूप ! मा कृथाः लवमात्रतः ॥३८॥
गर्भे चतुर्थे यो भावी, पुत्रोऽसौ सप्तमो मतः। स विष्णुर्नात्र संदेहो, वैरिवृन्दकुलान्तकृत् ॥३९॥
जरासंधस्य कंसस्य, स वै हन्ता भविष्यति। भोक्ता खण्डत्रयाणां च, चक्रधारी न संशयः ॥४०॥
वसुदेवोऽपि तेनैव, मुनीन्द्रवचनेन च। तुष्टचित्तः प्रियायुक्तो, मुनिं नत्वा गृहं गतः ॥ ४१ ॥

स्वे स्वे चित्ते तदा दौष्ट्यम्, धृत्वा तौ कंसयादवौ । स्थितौ बाह्योपुरङ्गेण, वदरिकारधारिणौ ॥४२॥
कियन्नपि गते काले, गर्भं दध्रेऽथ देवकी । सञ्जाते सप्तमे मासे, कंसो निन्ये गृहं निजम् ॥४३॥
पूर्णकाले ततो जाते, प्रसूतिसमयोन्मुखी । रक्षिता सा तु कंसेन, रक्षणैर्विविधैस्तदा ॥ ४४ ॥
प्रसूता देवकी यावत्, पुत्रयुग्मं सुसुन्दरम् । तावत् दैवैः कृतस्तस्य, व्यत्ययः क्षणमात्रतः ॥४५॥
पुत्रयोः प्रसवं श्रुत्वा, कंसस्तत्र समागतः । निर्दयः पादयोः धृत्वा, स्फालयित्वा त्वमारयत् ॥४६॥
देवकी दुःखिनी जाता, वसुदेवस्तथैव हि । किञ्चित् कालं तु तत्रैव, स्थित्वा याति गृहं निजम् ॥४७॥
गर्भे पुनः समुद्भूते, नीत्वा कंसः पुरे च ताम् । तथैव पुत्रयुग्मं हि, कृतवान् दुष्टधीः क्षणात् ॥४८॥
तथैव तृतीये गर्भे, चक्रे दुष्टमतिः शठः । दैवैः पुरेव संग्राह्य, व्यत्ययो निर्मितस्तदा ॥ ४९ ॥
तथापि देवकी दुःखं, कृतवान् पुत्रशोकजम् । वसुदेवो निजं वाक्यं, पालनाय समुद्यतः ॥५०॥
कियत्यपि गते काले, रात्रौ सुप्ताऽथ देवकी । सुखेन पश्चिमे यामे, स्वप्नान्नेतान् व्यलोकयत् ॥५१॥
सिंहो गजो मृगाङ्कश्च, सूर्यो वह्निस्तु सागरः । कमलाऽथ नागलोकं, लुलोक देवकी च तान् ॥५२॥
स्वप्नान्नेतान् ततो दृष्ट्वा, विबुद्धा सा सती वरा । प्रातरुत्थाय भूपाय, तया सर्वं निवेदितम् ॥५३॥

राजा स्वप्नफलं प्राह, श्रृणु देवि! सुतस्तव । अर्द्धरात्रौ समुत्पन्नो, वैरिवृन्दकुलान्तकृत् ॥५४॥
नवमो वासुदेवोऽयमतिमौक्तिकभाषितः । पित्रोः दुःखविनाशाय, पुत्रो देवि ! भविष्यति ॥५५॥
ततः स्वप्नफलं श्रुत्वा, देवकी चिन्तयाऽन्विता । जगाद स्वामिनं भक्त्या, जीविष्यति कथं सुतः॥५६॥
वसुदेवोऽपि तां प्राह, देवोऽस्य रक्षिता प्रिये ।। त्वया दुःखं न कर्तव्यम्, पुण्यवान् तनयस्तव॥५७॥
गर्भोऽसौ प्रकटो जातो, मन्दः मन्दः यदा तदा । खड्गे व्यलोकयद्वक्त्रं, देव्या स्थायि च विष्टरे॥ ५८
मासेऽथ पञ्चमे प्राप्ते, कंसो नीत्वा गृहं गतः । प्रत्यहं रक्षयन् गर्भं, रक्षणैः विविधैः शठः ॥५९॥
तदा तु श्रावणे मासे, मासे चैव तु सप्तमे। मेघेन वृष्टिरारब्धा, मुशलाकारधारिणी ॥६०॥
अष्टमी रोहिणीयोगे, मध्यरात्रौ मुहूर्तके । प्रसूता देवकी पुत्रं, शुभलक्षणसंयुतम् ॥ ६१ ॥
यथा कोऽपि न जानाति, तथा दासी तु प्रेषिता । समीपे वसुदेवस्य, पुत्रजन्मनिवेदिने ॥ ६२ ॥
गत्वा दासी नृपं प्राह, स्वामिन्! श्रृणु वचो मम। देवक्या हि सुतो जातो, रक्षणीयोऽतियत्नतः॥६३॥
श्रुत्वा तत्र गतो वेगाद्वसुदेवो बलान्वितः । नीत्वा प्रच्छन्नवृत्त्या तं, पुत्रं बाह्ये विनिर्गतः ॥६४॥
मन्दं मन्दं च तौ यातौ, प्रतोल्यां निभृतौ क्रमौ । उद्घाटितौ कपाटौ च, तत्पादघाततस्तदा॥६५॥

जलविन्दुर्गते घ्राणे, क्षुवथुस्तेन कृता दृढा। प्रतोल्योपरितस्तेनोग्रसेनेन श्रुतं तदा ॥ ६६ ॥
चिरं जीवेति स प्राह, पञ्जरस्थोग्रसेनकः। वसुदेवेन तत्पार्श्वे, गत्वा स प्रोचितो द्रुतम् ॥६७॥
इदं गुह्यं न कस्याऽग्रे, नो वाच्यं भूपते! त्वया। उग्रसेनो वसुदेवमूचे प्रीतिकरं वचः ॥६८॥
प्रच्छन्नत्वेन तं नीत्वा, याहि वालं मनोहरं। यत्र जीवेति वालोऽयमतो मे स्याच्च मुक्तता ॥६९॥
वसुदेवोऽथ तं वालं, नीत्वा वाह्ये विनिर्गतः। वलेनोपरिष्टाच्छत्रं, धृतं मेघनिवारकम् ॥ ७० ॥
वसुदेवो वलेनाऽथ, वालं नीत्वा गतस्तटे। यमुनायाः परं पूरे, तीर्त्वा तौ च वहिर्गतौ ॥ ७१ ॥
वृन्दावनं समायातौ, यत्र नन्दोऽस्ति गुर्जरः। यशोदा भामिनी तस्य, प्रसूताऽस्ति च तत्क्षणे ॥७२॥
तावत्तत्राऽऽगतौ दृष्ट्वा, नन्दस्तौ वालकान्वितौ। किं वा कारणमुद्दिश्य, पूज्यावत्र समागतौ ॥७३॥
इति पृष्टे च नन्देन, वसुदेवोऽपि तं जगौ। निजं दुःखं तदा तस्मै, सोऽपि दुःखेन दुःखितः॥ ७४॥
कंसेन निहता पुत्राः, षट् पूर्वं च ममैव हि। सप्तमो यो हि पुण्येनाऽऽनीतोऽस्ति तव मन्दिरे ॥७५॥
येन केनाऽप्युपायेन, रक्षणीयोऽयमर्भकः। यथा कंसो न जानाति, कर्त्तव्यं हि तथा त्वया ॥७६॥
तदा नन्दोऽपि तं प्राह, शृणु नाथ! हितं वचः। मम गेहेऽस्ति दुहिताऽधुना जाता यशोदया ॥७७॥

तां नीत्वा तत्र गत्वा च, देवक्या देहि वेगतः। यथा कंसो न जानाति, बालो मे स्थास्यति गृहे ॥७८॥
कंसोऽपि पुत्रिकां दृष्ट्वा, विघ्नं नैव करिष्यति। करिष्यति यदा किं नु, तदा जातं किमावयोः॥७९॥
पुत्रेऽस्मिन्ध्रियमाने हि, बहवः पुत्रिका मम। पुत्र्याः कृत्वा च पुत्रो चेत्, लभ्यते किं न लभ्यते॥८०॥
इति नन्दवचः श्रुत्वा, दत्वा तं देहजं निजम्। तस्य पुत्रीं समानीय, जायायै यादवो ददौ ॥८१॥
निजे गेहे समागत्य, वसुदेवो बलान्वितः। निद्रां हि ससुखं चक्रे, निश्चिन्तोऽभूत् तदा ध्रुवम् ॥८२॥
विबुद्धाभिस्तदा स्त्रीभिः, कंसाय विनिवेदितं। प्रसूता देवकी नाथ!, सञ्जाता पुत्रिका वरा॥८३॥
कंसोऽपि वचसा तेन, रुष्टः सूतिगृहे गतः। दृष्ट्वा तां पुत्रिकां दुष्ट-श्चिन्तामेनां चकार सः ॥८४॥
अनया बालया किं मे, मरणं वा भविष्यति। अथवा चास्याः पतिः, कश्चिन्मरणं मे करिष्यति॥८५॥
तस्मादुपायं तं कुर्वे, येन कोऽपि च नेहति। इति विमृश्य दुष्टात्मा, नाशमस्याः निराकरोत्॥ ८६ ॥
छित्वा नासां गते पापे, देवकी गृहमागता। गोकुलस्थोऽप्यसौ बालो, ववृधे गोपसेवितः ॥ ८७॥
कंसस्याऽपि तदा गेहे, सुखहानिकरा परा। उत्पाता बहवो जाताः कंसवंशनिकन्दकाः ॥८८॥
नैमित्तकं तदा सोऽपि, प्रपच्छोद्विग्नमानसः। ज्योतिर्वित्त्वं ममाख्यहि कथमुत्पादका इमे ॥ ८९ ॥

ज्योतिर्विदा तदाऽख्यातं, कोऽपि वैरीवने तव । वैरी वृद्धाति ते घाती, तस्मादुत्पातका इमे ॥ ९०॥
नैमित्तिकवचः श्रुत्वा, कंसोऽसौ शङ्कयाऽन्वितः। देवानाराधयामास, यान् पूर्वभवसञ्चितान् ॥९१॥
पूतनारूपमादाय, देवैकोऽत्र समागतः। विषेणैव कुचो लिप्त्वा, दुष्टबुद्ध्या युतोऽन्यदा ॥९२॥
पय.पानं तु कुर्वाणा, ज्ञात्वा बालेन तं विषम्। कूचयोः खण्डनं चक्रे, पुत्कृत्वा खे गता तु सा ॥९३॥
उन्दूखलासुरस्तत्र समायातो विरूपकः। जालमालौ तौ समायातौ, सकटाख्यस्तथाऽसुरः ॥९४॥
इत्यादि विविधैर्दैत्यैः; दुष्टचित्तैः समागतैः । जातं किंचिन्न बालस्य; तस्य पुण्यवतस्तदा ॥९५॥
एकदा तु वने कंसः, स्वयं तत्र समागतः। विलोकनाय कृष्णस्य, व्यग्रचित्तोऽतिभीतितः ॥९६॥
आगच्छन्तं तदा कंसं, ज्ञात्वा सोऽपि यशोदया। गोचारणमिषेणैव, वने कृष्णो विसर्जितः ॥९७॥
कंसस्तत्र समागत्य, यदा कृष्णं न पश्यति । पृष्टा तेन यशोदा च, तयाऽवादि वने गतः ॥९८॥
तत्र गन्तुमशक्यत्वं, ज्ञात्वा कंसेन देवता । प्रेषिता तद्विनाशाय, दैत्यास्तत्र गता द्रुतम् ॥९९॥
गत्वा दैत्यास्तु खे स्थित्वा, दृपदां वृष्टिरुत्कटा। प्रारब्धाऽत्र यदा कर्तुं, धेनवः क्रन्दितां गताः॥१००॥
गोपालास्तेऽपि पाषाणैः; पीडितास्तत्क्षणे च तैः । तदा कृष्णेन तेषां हि, धृतो गोवर्द्धनोपरि ॥१०१॥

उद्धृतं तु गिरिं दृष्ट्वा, वामहस्तेन विष्णुना। दैत्यैस्तु कंससंकाशं, गत्वा सर्वं निवेदितं ॥१०२॥
कंसोऽपि शङ्कयाऽऽविष्टो, जगाम निजमन्दिरं। कृष्णोऽपि लीलया युक्तः, क्रीडां चक्रे निरङ्कुशः॥१०३॥
प्रत्यहं बलदेवोऽपि, पाठत्येन संगोपकं। तस्य बालसमुद्भूतां, पितॄणां पुरतः सदा ॥१०४॥
वार्तां तु बलदेवोऽसौ, प्रत्यहं विनिवेदति। पुत्रपराक्रमं श्रुत्वा, पितरः हर्षिता ययुः ॥१०५॥
देवकी पुत्रवार्तां वै, श्रुत्वोत्कण्ठां चकार च। बलदेवं सदा प्रोचे, तं बालं मम दर्शय ॥१०६॥
विमृश्य बलदेवोऽपि, कारयित्वाऽष्टमीदिने। प्रोषधं देवकी प्रीता, नीता सा गोकुले वरे॥१०७॥
पूजाविधिं समस्तां तु, नीत्वा याता बलेन सा। गोकुले हि तया दृष्टं, कौतुकैर्विविधैर्युतम् ॥१०८॥
वत्सानां क्रीडनं तत्र, गवां हम्भारवः क्वचित्। गोपाला वंशनादेन, कुर्वन्ति नर्त्तनं परम् ॥१०९॥
दध्नां मन्थनजं नादं, मेघनादं विडम्बति। नवनीतानां तपनं, गोप्यः कुर्वन्ति कुत्रचित् ॥११०॥
धेनूनां दुह्यमानानां, गम्भीरो निनदः क्वचित्। पयसा पूरिता कुम्भा, दृश्यन्ते बहवः क्वचित् ॥१११॥
वाटकस्थितवत्सानां, श्रूयते निनदः क्वचित्। क्वचिद्धेनुसमारावं, श्रूयते वत्समोहजम् ॥११२॥
एवंविधं तदा दृष्ट्वा, देवकी गोकुलं वरम्। प्रमोदं परमं प्राप्ता, चिन्तां कर्तुम् समुद्यता ॥११३॥

मत्तोऽपि हि वरा गोप्यो, या वसन्ति वने वरे । कौतुकं ता हि पश्यन्ति, पुत्रपौत्रैः समन्विताः ॥११४॥
अथ तां देवकीं दृष्ट्वा, यशोदा भक्तिपूरिता । ननाम पादयोश्चास्याः, आसनं त्वसमर्प्यत् ॥ ११५॥
करयोः सम्पुटीकृत्य, वाक्यं वक्तुं प्रचक्रमे । अद्य मे सकलं देवि !, गोकुलं च पवित्रितम् ॥११६॥
सनाथा हि वयं जाताः, तवागमनमात्रतः । त्वं नो वै स्वामिनी माता, वयं तु तव सेवकाः ॥११७॥
वर्द्धापिता हि गोपीभिः, देवकी तत्र चागता। तदा जगाद तां देवी, यशोदा विनयान्विताम् ॥११८॥
यशोदे ! बलवान् पुत्र, त्वया जातो मया श्रुतः । दर्शय त्वं ममाऽत्रैव, गोपालोऽसौ तवात्मजः ॥११९॥
यशोदया समानीय, गोपवेषधरं वरं । मयूरपिच्छमुकुटम्, वंशवादनतत्परम् ॥१२०॥
सिन्दूरेण कृतं लेपं गोपालैर्बहुभिर्युतम् । पुत्रं कृष्णनामानं, देवक्या अदर्शयत्तदा ॥१२१॥ युग्मं ॥
कृष्णोऽपि देवकीपादौ, नत्वा चाग्रे न्यवीविशत् । साप्याऽलिङ्गनमात्रेण, तुष्टा चैनं व्यलोकयत् ॥१२२॥
यशोदे ! त्वन्तु धन्याऽसि, यया जातः सुतो ह्ययम् । प्रत्यहं मुखमस्यैव पुण्यात्पश्यासि निश्चितम् ॥१२३॥
ततो मोहभरेणाऽस्याः, कुचाभ्यां तु पयोऽश्रवत् । तेनैव पयसा तस्याः, भिन्नाः सर्व्वापि कञ्चुकाः ॥१२४॥
पयःश्रवन्तीं तां दृष्ट्वा, बालोऽपि चकितो हृदि । दृष्ट्वा कोऽप्यत्र दुष्टात्मा, कंसस्य कथयिष्यति ॥१२५॥

भयेन चकितः सोऽपि, घटं नीत्वा पयोमयम् । देवकी स्नापिता तेन, सहितेन यशोदया ॥ १२६॥
यशोदा देवकीं प्राह, त्वद्योग्यं गोकुलं न हि । तस्मात् पयोभिर्हेमातः! स्नपनं तेऽहं करोम्यतः ॥१२७
उत्थाप्य देवकीं रामो, रोपयित्वा रथे वरे । जगाम च भयत्रस्तो, मन्दिरे तत्क्षणान्निजम् ॥१२८॥
गमनाऽवसरे तस्मै, सुशिक्षां देवकी ददौ । धेनूनां पालनं वत्स! कर्त्तव्यं च त्वया चिरम् ॥१२९॥
त्वमस्माकं हि गोपालो, नन्दनस्त्वय नन्दन!। मा भूयात्तव पितृणां, तव दुःखं कदाचन ॥ १३० ॥
इत्युक्त्वा तु गता गेहं तदा प्रमोदपूरिता । निजपुत्रमुखाऽलोके, कस्या हर्षो न जायते ॥१३१॥
करोति विविधां क्रीडां, कृष्णोऽसौ गोकुले स्थितः । भूष्यते बलभद्रेण, वयोचितविभूषणैः॥ १३२॥
गोपिभिर्विविधां क्रीडां, वस्त्राकर्षणकादिकाम्। मह्याढोलनकंचाऽपि, चक्रे कृष्णोऽथ प्रत्यहम् ॥१३३॥
कंसो नैव सुखं लेभे, रात्रौ निद्रां दिवा क्षुधां। शत्रोर्विलोकनार्थाय मतिस्तेनाऽपराकृता ॥ १३४ ॥
आहूय तेन गोपालान्, दत्तं प्रेषणकं परम्। कालिन्द्या हृदजाताऽन्याऽनीयतां कमलानि मे ॥१३५॥
तदा सर्वेऽपि गोपालाः, कृष्णाद्यास्तत्र चागताः। कंसं कृष्णस्तदा प्राह, नाम्नाऽऽदेशोऽपि दीयताम् ॥१३६
रोषेण तं जगौ कंसो, दत्तं कार्यं तवैव हि । एवमस्त्विति सम्भाष्य नत्वा कंसं विनिर्ययौ ॥१३७॥

गोपालैः सकलैर्युक्तो बलदेवाऽन्वितस्तदा । यमुना ह्रदोऽपकण्ठे, स्थित्वा नीरं व्यलोकयत् ॥१३८॥
ह्रदे पपात गम्भीरे, चटित्वा च तरूपरि । यशोदाऽपि समायाता, पतितुं पुत्रमोहतः ॥ १३९ ॥
तटे गत्वा ह्रदं दृष्ट्वा, भयत्रस्ता स्थिता परम्। मरणेन समः कोऽपि, वर्त्तते न भयोऽपरः ॥१४०॥
कृष्णो गतोऽथ पाताले, कृष्णनागं व्यलोकयत् । नाथयित्वाऽत्र तं नागं, निर्ययौ कमलैः सह ॥१४१॥
कृष्णं विनिर्गतं दृष्ट्वा, गोपाला हर्षसंयुता । नर्त्तनं परमं चक्रुः, वंशवादनपूर्वकम् ॥ १४२ ॥
बलदेवेन गोपालैर्युक्तो विष्णुः समागतः । मथुराया यदा मध्ये, तदाऽलोकैर्विलोकितः ॥ १४३ ॥
लोकैर्विलोक्यमानोऽसौ स्तूयमानः पदे पदे । कंसाऽग्रे कमलान्मुक्त्वा, प्रणामं कृतवांस्तदा ॥ १४४॥
कंसोऽपि कमलान् दृष्ट्वा, चिन्तया परिपीडितः। अपरोपायचिन्ता तु, चक्रेऽसौ बुद्धिवर्जितः ॥१४५॥
श्रूयतां सर्वगोपालैः शय्येयं नागनामिका। ममाऽऽरोहति तस्यैव, दीयते नियतं मया ॥ १४६ ॥
सारङ्गाऽख्यं धनुरिदं, ज्यारूढं यो करोति वै। तस्यैव दीयते सत्यं, गोपाला हि वचो मम ॥१४७॥
पाञ्चजन्याऽभिधो शङ्खो, यो वै वादति मानवः। तस्यैव दीयते नूनं, शङ्खरत्नं मया ध्रुवम् ॥१४८॥
शय्यारूढा क्षणात्तेन, चटाप्य धनुरुत्तमम्। पूरयन् पाञ्चजन्यं वै, नादश्चक्रे मनोहरम् ॥१४९॥

पश्यतां सर्वलोकानां, निजशक्त्या विभूषितः। कृष्णोऽत्र जयनादं वै, प्राप्तः सर्वजनादपि ॥१५०॥
कंसोऽसौ म्लानवदनः, सञ्जातो दर्शनादपि। मायेर्ष्या बलदेवोऽपि, चक्रे कृष्णं भयात्तदा ॥१५१॥
रे रे गोपाल! मूढात्मन्! धेनून् मुक्त्वा चिरं स्थितः। याहि वृन्दावनं शीघ्रं, गोपालैः परिवेष्टितः ॥१५२॥
शय्या धनुः स शङ्खं च, कृष्णो नीत्वा वने गतः। कंसोऽपि दुःखभारेण, पीडितोऽभूत्तदा हृदि ॥१५३॥
कंसस्याऽपि हि मल्लौ द्वौ, चाणूर-मुष्टिकाभिधौ। पृष्टौ चैकान्ततस्तौ तु, भवद्भ्यां किमपि जायते ॥१५४॥
मल्लाभ्यां तु तदा स्मित्वा, जल्पितं तं नृपं प्रति। आवयोस्तु करे तस्मिन्, चटिते ज्ञायते ध्रुवम् ॥१५५॥
तयोः हि वचनं नीत्वा, कंसेनाऽपि तु हर्षतः। मल्लशाला समारब्धा, मल्लाना युद्धहेतवे ॥१५६॥
गोपालेभ्यस्तदा तेन प्रेषितं तु निमन्त्रणम्। अमुकस्मिन् दिने सर्वैर्गोपालैर्युद्धहेतवे ॥ १५७ ॥
आगन्तव्यं ममाऽऽवासे, मल्लयुद्धं भविष्यति। बलिभद्रेण तं श्रुत्वा, वसुदेवाय निवेदितम् ॥१५८॥
वसुदेवेन तत्रैकः, प्रहितः सूर्यपुरे वरे। आह्वानाय दशार्हाणां, तत्क्षणात्तैः समागताः ॥ १५९ ॥
मिलित्वा यादवाः सर्वे, मन्त्रं कर्तुं समुद्यताः। तदा चित्तेऽथ कंसोऽसौ, प्राप्तः शङ्कां सुदुस्त्यजाम् ॥१६०॥
मायया सन्मुखं गत्वा, कंसेन च ते मानिताः। वसुदेवो गृहं निन्ये, सन्तोष्य कंसभूपतिम् ॥ १६१॥

मिलित्वा यादवाः सर्वे, मन्त्रं कर्तुं समुद्यताः । कंसेनैव हि दुष्टेन, प्रारब्धा दुष्टता परा ॥१६२॥
कंसोऽपि नियमाद्बध्यो दौष्ट्यं चेद्दै करिष्यति । इति ध्यात्वा स्थिताः सर्वे, प्रच्छन्ना यादवास्तदा ॥१६३॥
तस्मिन्दिने प्रभातेऽथ, वलदेवो गतो वने। जगादैवं यशोदां स, यशोदे ! मे वचः श्रृणु ॥१६४॥
क्रियतां भोजनं शीघ्रं, स्नानं नौ सज्यतां द्रुतम्। गन्तव्यं मल्लयुद्धार्थे, मथुरायां हि वेगतः ॥१६५॥
साऽपि युद्धवचः श्रुत्वा, जाता मन्दगतिस्तदा। तां तु मन्दगतिं दृष्ट्वा, वलोऽसौ रोषतो जगौ ॥१६६॥
हे आभीरप्रिये ! त्वं हि, गर्वं किन्तु समाश्रिता । ममाऽपि वचनं या वै, न करोत्यथ वेगतः ॥१६७॥
वलदेवस्य वचसा, जाता सा साश्रुलोचना । रुदन्तीं मातरं दृष्ट्वा, कृष्णो म्लानमुखोऽभवत् ॥१६८॥
कृष्णं म्लानमुखं दृष्ट्वा, नीत्वा नद्यां गतो वली। नद्यास्तटे च तौ गत्वा, वलः प्रोवाच माधवम् ॥१६९॥
कस्मात्त्वं म्लानतां प्राप्तः, कथ्यतां मम वेगतः । जगाद केशवो वाक्यं, श्रृणु स्वामिन्निगद्यते ॥१७०॥
मम माता यशोदा हि, गालीं दत्त्वा ममाग्रतः। त्वया न ताडितोऽहं वै, कथं नाथ ! प्ररोपतः ॥१७१॥
वलदेवोऽथ तं प्राह, दत्त्वा चालिङ्गनं दृढम्। ते न माता यशोदा हि, माता ते देवकी ध्रुवम् ॥१७२॥
दुष्टेन कंसराजेन, हतास्ते भ्रातरो हि षट्। त्वयि नाशे प्रवृत्तेऽस्मिन्, व्यत्ययोऽयं मया कृतः ॥१७३॥

यशोदापुत्रिकां नीत्वा, जनन्यास्ते समर्पिता । त्वां समानीय रात्रौ हि, यशोदाय समर्पितः ॥१७४॥
यशोदा स्तन्यपानेन, ववृद्धे त्वां सुतेच्छया। कंसेन यत्कृतं तुभ्यं, तत्सर्वं त्वं हि वेत्सि न ॥१७५॥
अद्यापि दुष्टतां पापी, न जहाति पुरातनीम्। तवैवाऽत्र निपातार्थं, रोपिता मल्लशालिका ॥१७६॥
मज्जयित्वा जले नद्यां, हर्षाद् गेहे च तौ गतौ। गत्वा तां मातरं नत्वा, ययाचे भोजनं वरम् ॥१७७॥
यशोदया तदा तौ च, आसने भोजनाय च। स्थापयित्वा यशोदाऽऽह, पुत्रावत्रोपविश्यताम् ॥१७८॥
उपविष्टौ च तौ हर्षादासने भोजनेच्छया । प्रक्षालितौ करौ ताभ्यां, भोजने चाऽपि शालिने ॥१७९॥
यशोदा विविधाऽन्नेन, भोजने तावपूरयत् । शाल्योदनसुगन्धंच, मुद्गसूपंमनोहराः ॥ १८० ॥
अनेकानि च शाकानि, तापितं गोघृतं तदा। दध्योदनं सकर्पूरमेलालावणसंयुतम् ॥ १८१ ॥
भोजयित्वा विविधान्नं, दत्तमाचमनं तदा। करौ प्रमार्जितौ ताभ्यां, श्रीखण्डाऽगुरुचन्दनैः ॥१८२॥
ताम्बूलं भक्षितं ताभ्यां, सिन्दूरेणाऽपि चर्चितौ ।पुष्पमाला कृता कण्ठे, सुगन्धि पीतरेणुना ॥१८३॥
मल्लवेषं वरं नीत्वा, बद्धकच्छौ बभुवतुः । जनन्याः प्रणतिं कृत्वा, निर्गतौ मथुरां प्रति ॥ १८४ ॥
शकुनैः प्रेर्यमाणौ तौ, गोपालैः परिवेष्टितौ । आगच्छन्तौ तदा श्रुत्वा, कंसः शङ्कामुपागतः ॥१८५॥

कंसोऽपशकुनं चक्रे, दैत्यैः कृत्वा पथि तयोः । तौ क्रोधाच्छकुनैस्तैस्तु, निवारितावपि न स्थितौ ॥१८६ ॥
समागतौ तदा पुर्यां, वलकृष्णौ मदोद्धतौ । लोकैर्विलोक्यमानौ तौ, ज्ञातौ कंसनिकन्दकौ ॥१८७॥
मल्लशालां तदा प्राप्तौ, यत्र कंसो महीपतिः । वसुदेवोऽपि संनद्धं, निविष्टो चाऽत्र यादवैः ॥१८८॥
कंसोऽथ शङ्कयाऽऽविष्टो, मल्लयुद्धं समादिशत् । चाणूरमुष्टिकौ मल्लौ, प्रहितौ द्वौ माधवं प्रति ॥१८९॥
कृष्णः चाणूरमल्लेन, चक्रे युद्धं यदोत्कटम् । तदा कंसेन दृष्टाऽसौ, प्रेषितो मुष्टिकोऽपि हि ॥१९०॥
उत्थितं मुष्टिकं दृष्ट्वा, वलदेवोऽपि उत्थितः । तदा वामकरेणैव, मुष्टिकं तं न्यवारयत् ॥ १९१ ॥
वलो वामकरं यावन्मस्तकेऽस्य प्रमुच्य च । जगादेवं हि तिष्ठ त्वम्, एकोऽत्र युद्ध्यतामिति ॥१९२॥
वलदेवभुजेनैव, गतप्राणो वभूव सः । मुष्टिको त्रुडितग्रीवो, दृष्टो लोकैस्तदा मृतः ॥ १९३ ॥
कृष्णेनाऽपि हि चाणूरं, ताडयित्वा तदा हृदि । मुखे चैव गतप्राणं, चक्रे तं रुधिरेण हि ॥१९४॥
कंसेनाऽपि तदा दृष्टौ, मल्लौ तौ दुर्जयो मृतौ । तत्र कंसः स्वयं क्रुद्धः, खड्गं नीत्वा समुत्थितः ॥१९५॥
उत्थापयित्वा तदा कृष्णं, कंसोऽसौ रक्तलोचनः । जगाद दुष्टवाक्यं हि; रे रे कृष्ण ! दुरात्मक ! ॥१९६॥
मम मल्लौ हि तौ द्वौ च, प्रहितौ निहतौ कथम् । क्रीडया क्रीडमानौ यौ, विश्रब्धौ मुग्धमानसौ ॥१९७॥

प्रेषयामि दुराचारं, त्वामहं यममन्दिरे । इत्युक्त्वा खड्गमादाय, कृष्णं कंसः समागतः ॥१९८॥
समागतं तदा कंसं, दृष्ट्वा कृष्णोऽपि कोपितः । दिग्गजालानकं स्तम्भं, उद्धृत्य सन्मुखं स्थितः॥१९९॥
कंसं कृष्णस्तदा प्राह, रे रे दुष्ट ! दुरात्मक!। निहता हि त्वया पूर्वं, ममैव षट् सहोदराः॥२००॥
तत्सर्वांत्रैकवारेण, वालयाम्यधुना ध्रुवम्। इत्युक्त्वा हि चिरं युद्धम्, चक्रे कंसेन माधवः ॥२०१॥
सर्वेऽपि यादवास्तत्र, कर्तुं युद्धं समुद्यताः । रणे महति सञ्जाते, भटानां हि क्षयोऽभवत् ॥२०२॥
कृष्णेनाऽपि तदा कंसो, हत्वा स्तम्भेन तत्क्षणात्। पातयित्वा तदा भूमौ, गतप्राणः स वै कृतः ॥२०३॥
गते कंसेऽथ तत्सैन्यं, सर्वं चाऽपि पलायितम् । विष्णोराज्ञा हि सर्वत्र, सञ्जाता हि पुरे वरे ॥२०४॥
संस्कारोऽपि तदा तस्य, कंसस्य यादवैः कृतः। स्नानं कृत्वा समायाताः, गृहे सर्वेऽपि यादवाः ॥२०५॥
ततो निष्कण्टका सर्वे, भुक्ताश्चैकत्र यादवाः । देवक्या निर्मितं चान्नं स्वहस्ताऽऽमोदपूर्वकम्॥ २०६ ॥
अथ नीलंयशा कोपात् गत्वा राजगृहे द्रुतम्। जरासङ्घस्य पुरतः, चक्रे कङ्कणखण्डनम् ॥२०७॥
जगाद मरणं भर्तुः, मुक्तकण्ठं रुरोद सा। जरासङ्घस्तदा कोपाद्, जगाद पुत्रिकां निजाम्॥२०८॥
मा दुःखं त्वं कृथा वत्से! दैवसूत्रं हि दुस्तरम्। मम जामातरं हत्वा, काऽसौ यास्यति दुष्टधीः॥ २०॥

पुत्रि! त्वं मन्दिरं गच्छ, त्यक्त्वा दुःखं सुदुस्त्यजम्।प्रेषयामि दुराचारं, तं द्रुतं यममन्दिर ॥२१०॥
प्रेषयित्वा तदा पुत्रीं, गृहे राजाऽतिकोपधीः। स्वयं गन्तुं मनश्चक्रे, यादवानां तदोपरि ॥२११॥
गच्छन्तं नृपतिं दृष्ट्वा, भ्राता तस्य महीभृतः। जगाद प्रणतिं कृत्वा, क भ्रातः! गम्यते त्वया ॥२१२॥
दुष्टाः ये यादवाः सन्ति, तेषामन्तं करोम्यहम्। ततो भ्रातृवचः श्रुत्वा, नत्वाऽसौ बीटमग्रहीत् ॥२१३॥
नाथैतेषु वराकेषु, कोपस्ते नैव युज्यते। हन्तव्याः यादवा नूनम्, मया गत्वाऽतिवेगतः ॥२१४॥
अपराजितोऽपि सैन्येन, महताऽसौ विनिर्गतः। मथुरायां वेगतः प्राप, वर्त्तते यत्र यादवाः ॥२१५॥
यादवा निर्गता बाह्ये, युद्धार्थे बलशालिना। महयुद्धं तदा जातं, अपराजितकृष्णयोः ॥२१६॥
हतोऽथ खड्गघातेन, कृष्णेनाऽप्यपराजितः। अपराजितं मृतं दृष्ट्वा, सैन्यं सर्वं पलायितम् ॥२१७॥
अतस्ते यादवाः सर्वे, कण्टकैः परिवर्जिताः। मथुरायां स्थिताः केचित्, केचित् सूर्यपुरे स्थिताः ॥२१८॥
अथाऽसौ श्रेणिको राजा, प्रपच्छ गणनां पतिम्। कथं नाथ! समुत्पन्नो, नेमिनाथो जिनेश्वरः ॥२१९॥
गौतमोऽपि जगादेवं शृणु श्रेणिक! कथ्यते। उत्पत्तिर्नेमिनाथस्य, कथयामि समासतः ॥२२०॥
समुद्रविजयो नाम, यादवानामधीश्वरः। तस्याग्रमहिषी रम्या, शिवादेवीति विश्रुता ॥२२१॥

एकदा सा निशि यामे पश्चिमे शयिता सुखम् । स्वप्नान् विलोकयामास, जिनोत्पत्तेः प्रदर्शकान् ॥२२२॥
गजेन्द्रं वृषभं चैवं, मृगेन्द्रं कमलां तथा । पुष्पमाले मनोज्ञे तु, सम्पूर्णं चन्द्रमण्डलम् ॥ २२३ ॥
उदयन्तं तथा सूर्यं, महेन्द्रध्वजमेव च । कुम्भं पुष्पफलाकीर्णं, सरोजैर्निचितं सरः ॥ २२४ ॥
जलधिं चातिगम्भीरं, कल्लोलैर्भीषणैर्युतम् । किङ्कणैश्च समायुक्तं नागलोकं सुधाश्चितं ॥ २२५ ॥
रत्नपुञ्जं पवित्रं च, ज्वालायुक्तं हुताशनम् । एतान् विलोकयामास, निशि देवी सतीवरा ॥२२६॥
विबुद्धा च ततो देवी, स्वप्नान् दृष्ट्वा चतुर्दश । प्रातरुत्थाय यत्कृत्यं, तत्कृतं भूषणादिकम् ॥ २२७ ॥
सखीभिः सहिता याता, भूपतेः सा सभान्तरम् । ततो भूपतिना साऽपि, वामाङ्गे विनिवेशिता ॥ २२८॥
किमत्र कारणं देवि !, कृत्वा चित्ते समागता । शिवादेवी ततोऽवादीत्, शृणु स्वामिन् ! समोदितम् ॥२२९॥
राजन् स्वप्नफलं ब्रुहि, मया रात्रौ विलोकिता । प्रत्येकं कथयामास, देवी पत्ये चतुर्दशः ॥२३०॥
राजा स्वप्नफलं प्राह, पुत्रस्ते तीर्थनायकः । भविष्यति ध्रुवं देवि !, देवैर्मानितशासनः ॥२३१॥
प्रत्यहं रत्नवृष्टिश्च, कुर्वन्ति विबुधा गृहे । दिक्कुमार्योऽपि ते सेवां, कर्त्तुमेता समुद्यताः ॥२३२॥
तीर्थराजस्य सम्भूतिं, श्रुत्वा देवी प्रमोदिनी । सखीभिश्च गता गेहं, राज्ञा सा प्रेषिता सती ॥२३३॥

मन्दं मन्दं ययौ वृद्धिं, गर्भोऽसौ सुरपूजितः। देवी दुखं न जानाति, मुकुरे प्रतिविम्बवत् ॥२३४॥
पूर्णे काले ततो जाते, सुलग्ने सुमुहूर्त्तके। प्रसूताऽथ ततो देवी, पुत्रं लोकत्रयार्चितम् ॥२३५॥
सञ्जातेऽथ तत्पुत्रे, प्रोत्सवो नगरेऽभवत्। सोत्साहाश्च जना जाता, सर्वे वै हर्षपूरिताः ॥ १३६ ॥
विष्टराणि च देवानां कम्पितान्यतिवेगतः। वादित्राणां विविधानां, सञ्जातो ध्वनिरुत्तमं ॥२३७॥
अवधिज्ञाननेत्रेण, ज्ञात्वा शक्रोऽपि हर्षितः। तीर्थङ्करोऽधुनाजातो, पुण्याढ्या भरतेऽधुना ॥ २३८॥
ऐरावणं समारुह्य, वज्रहस्तशचीयुतः । सौधर्मेन्द्रोऽपि देवाद्यैर्निर्ययौ भक्तिनिर्भरः ॥२३९॥
दुन्दुभीनां हि निवहैः पटहादिसमूहकैः । घण्टादिशब्दभेदैश्च, श्रूयते श्रवणैर्नहि ॥ २४० ॥
महोत्सवेन महता, शक्रः सूर्यपुरेऽगमत् । पश्चाचर्य हि तत्रैव, चक्रे भक्तिसमन्वितः ॥२४१॥
विभूष्य विभवेनाऽसौ, तदा सूर्यपरं वरम्। शच्याः समीपे, नेमिनाथमनाययत् ॥ २४१ ॥
शची सूतिगृहे गत्वा, स्पृष्ट्वा वालं नवीनकम्। मायया तत्र मुक्त्वाऽन्यं, नेमिनाथं जहार सा ॥२४३॥
जिनेन्द्रं तं समानीय, ददौ शक्रकरे शची । शक्रो गजेन्द्रमारूढो, प्रतस्थे मन्दिरं प्रति ॥ २४४॥
विभूत्या महता मेरौ, गत्वा शक्रः सुरैर्युतः। तं पाण्डुकवनं गत्वा, पाण्डुकंबलिकाशिला ॥ २४५॥

तत्र नीत्वा जिनेन्द्रोऽपि, स्थापितो विष्टरे वरे। देवीदेवसमूहेन, प्रारब्धमभिसेचनम् ॥ २४६॥
गत्वा क्षीरसमुद्रे हि, नीत्वा कुम्भसहस्रकम्। अष्टभिश्च युतं देवाः, रत्नकाञ्चननिर्मितम् ॥२४७॥
रचिता विबुधैः श्रेणिः, कुम्भानां हि मनोहरा। सागरान्मन्दरं यावज्जयशब्दं कृतस्वनैः ॥२४८॥
इन्द्रोऽभिषेचनं चक्रे, पौलोम्या सहितस्तदा। कृतेऽभिषेके शैलोऽसौ, जातस्तारमयो यथा ॥२४९॥
अपरेणैव क्षीरेण, क्षालितोऽथ जिनेश्वरः। अङ्गे प्रमार्जनं चक्रे, पौलोमी जिनभक्तितः ॥ २५०॥
ततो विलेपनं तस्य, श्रीखण्डाऽगुरुचन्दनैः। कृत्वा हि विविधैः पुष्पैः, पुजाञ्चक्रे पुरन्दरः ॥२५१॥
षोडशाऽऽभरणैर्देवं, हरिस्तत्र व्यभूषयत्। कर्णवेधं तदा कृत्वा, कुण्डले निहिते निजे ॥ २५२॥
मुमोच परया भक्त्या, शक्रोऽङ्गुष्ठे सुधारसम्। कृत्वा महोत्सवं शक्रः, स्तुतिं कर्तुं समुद्यतः ॥२५३॥
जय नाथ! जिनाधीश! जय विश्वपितामहः। देव! देव! जगन्नाथ!, जय त्वं परमेश्वर! ॥२५४॥
नमस्ते विश्वनाथाय, विश्ववन्द्याय ते नमः। स्वयंभुवे नमस्तुभ्यं, नमस्ते ज्ञानमूर्त्तये ॥ २५५॥
अजरामराय तुभ्यं, नमस्ते जितकर्मणे। भक्तानां वत्सलस्त्वं हि, त्वं दारिद्र्यविनाशकृत् ॥ २५६॥
आधिव्याधिनिहन्ता त्वं, कामधेनुस्त्वमेव हि। अनन्तशक्तिरक्षोभ्यः, वीतरागो गतस्पृहः ॥२५७॥

कामाऽहिर्गरुडोऽसि त्वं, कर्म्मकक्षहुताशनः । चिन्तामणिः समस्त्वं हि, भक्तेभ्यस्त्वं तु वत्सलः ॥२५८॥
शरणार्थिनां त्वं त्राता, भर्त्ता सज्जनसन्ततेः। जेता पञ्चेन्द्रियाणां त्वं, हर्त्ताऽसि विविधाऽऽपदम् ॥२५९॥
इति नानाविधैस्तोत्रैः स्तुत्वाऽसौ विबुधाऽधिपः। अरिष्टनेमिनामानं, चक्रे तं जिनपुङ्गवम् ॥२६०॥
ऐरावणसमारूढो, कृत्वा चाग्रे जिनेश्वरम्। महोत्सवेन महता, प्राप शौर्यपुरं वरम् ॥ २६१ ॥
शच्याकरेण तं मातुः, समीपे चाऽप्यमोचयत्। विभूषितं सुतं दृष्ट्वा, शिवादेवी सुविस्मता ॥२६२॥
पूजयित्वा तु पितरौ, नर्त्तयित्वा तदा भृशम्। वर्षयित्वा तु रत्नानि, ततो याति पुरन्दरः ॥२३३॥
देवानामधिपे याते, निजाऽऽवासे सुरैः सह। मिलित्वा यादवैः सर्वैरुत्सवः परमः कृतः ॥ २६४ ॥
वर्द्धते प्रत्यहं देवो, युक्तो देवकदम्बकैः । धनदेन कृता कल्प--वयोयोग्याविभूषणैः ॥ २६५ ॥
तावत्सोऽपि जरासन्ध्यः निहते स्वानुजे तदा ॥ महासाधनसंयुक्तो, निर्ययौ यादवोपरि ॥ २६६ ॥
आगच्छन्तं नृपं श्रुत्वा, सर्वे सम्भूय यदा। मन्त्रं ते परमं चक्रुः, भयभीतास्ततोऽखिलाः ॥२६७॥
अत्र स्थातुं न हि युक्तं, कृत्वा नै सन्धिविग्रहम्। परदेशे गमिष्यामो, यत्र नाऽयं शृणोतिनः ॥ २६८॥
विमृश्यैवं हि ते सर्वे, यादवा गन्तुमुद्यताः । तेषां हि नगरीलोकः, पृष्टे गन्तुं समुद्यतः ॥ २६९ ॥

सर्वसाधनसंयुक्ताः मथुरालोकैः समन्विताः। उग्रसेनादिभिः सर्वैः, यादवा चलितास्ततः ॥२७०॥
चलितैर्यादवैः सर्वैः, जरासङ्घः समागतः। उद्वासां नगरीं दृष्ट्वा, पृष्ठतो गन्तुमुद्यतः ॥ २७१ ॥
अग्रतो यादवाः यान्ति, जरासङ्घश्च पृष्ठतः। गच्छन्तो विविधैर्यानैः, यादवास्तेऽतिवेगतः॥ २७२॥
प्राप्तास्ते मार्गवशेनैते, सुवेलं नाम भूधरम्। पर्वते चटिताः सर्वे, यादवाः वेगतो भृशम् ॥२७३॥
तावत्सोऽपि जरासङ्घः, तलहट्यां समागतः। पर्वतात्तावदुत्तीर्य, यातास्ते यादवाः द्रुतम् ॥२७४॥
जरासङ्घे समायाते, पर्वतोपरि वेगतः। तावद्देवैः परं माया दर्शिता तस्य भूभुजः ॥ २७५ ॥
चतुरङ्गबलोपेतां दृष्ट्वा प्रज्वालितां चितां। वारणानां घटा काऽपि, ज्वलते काऽपि तुरङ्गमाः,॥२७६॥
काऽप्यत्र स्त्रीसहस्राणि, भुभूजानां शतं कचित्। दह्यमानं तदा दृष्टं, तैः कृतं यममन्दिरम्॥२७७॥
तत्र काऽपि जराक्रान्तां, कुर्वतीं परिदेवनाम्। दृष्ट्वा तां हि जरासङ्घो, प्रपच्छ युवतीं तदा ॥२७८॥
काऽसि वृद्धे त्वमत्रैव, किमिदं यममन्दिरम्। केन वाऽथ भयात्कस्य, कृतं वा केन हेतुना ॥२७९॥
तदा जगाद शृणु त्वं वृत्तं यच्च मयोच्यते। जरासङ्घाऽभिधानेन, कोऽपि भूपोऽस्ति भूतले ॥२८०॥
तस्य भयेन यदुभिः, रचितं यममन्दिरम्। अहं तु तेषां हि गोत्रस्य, दासी कुलक्रमाऽऽगता॥२८१॥

जीवितव्यप्रियाऽथास्मि, तस्मान्नोज्ज्वालिता प्रभो। तेषां दुःखेन संतप्ता, रोदनं तु करोम्यहम् ॥२८२॥
जरत्या वचनं श्रुत्वा, हृदि तुष्टो नराधिपः। मद्भयाद्यादवानां हि, स्थानं नो विद्यते क्वचित् ॥२८३॥
ततोऽपि चलितो राजा, दुष्टचित्तोऽतिवेगवान्। ज्वालितैः यादवैः सर्वैः, गमने किं प्रयोजनम् ॥२८४॥
चलित्वाऽथ गतो राजा, जरासङ्घ गृहे निजे। शत्रुशल्यविनिर्मुक्तो, चक्रे राज्यं निरङ्कुशम् ॥२८५॥
अतोऽपि यादवाः सर्वे, मन्दं मन्दं गतास्तदा। उपकण्ठे समुद्रस्य, लताङ्कुरैर्विराजिते ॥२८६॥
अक्षोटद्राक्षखर्ज्जुरी–द्राडिमादितरूत्करैः। एलालवङ्गवृक्षौघैर्नालिकेरीविराजितम् ॥२८७॥
एवंविधं तटं दृष्ट्वा, यादवा हृष्टमानसः। निवासार्थं मनः चक्रुः, ततो गन्तुं न युज्यते ॥२८८॥
एकस्मिन दिवसे कृष्णो, दर्भशय्यामुपागतः। उपवासत्रयं कृत्वा, ययांचे सागरासुरम् ॥२८९॥
तव प्राघुर्णिकश्चास्मि, दीयतां स्थानमुत्तमम्। दिनत्रये गते चासौ, प्रगटोऽभूत्सागराऽसुरः ॥२९०॥
करौ हि सम्पुटीकृत्य, नत्वाऽस्य चरणाम्बुजम्। कृष्णं जगाद विनयान्ममाऽऽदेशो हि दीयतां ॥२९१॥
कृष्णो जगाद हे देव !, स्थानं मे दीयतां वरम्। प्राघुर्णिकस्तवैवाऽस्मि, त्वं मे भ्राताऽसि निश्चितम् ॥२९२॥
विबुधो जगाद कृष्णं, श्रृणु नाथ! वचो मम। त्वयि जीवति रम्येदं, स्थानं दत्तं मया ध्रुवम् ॥२९३॥

सुकेतोः खेचरेन्द्रस्य, या सुता सत्यभूमिका। सा दत्ता वासुदेवाय, प्रथमा महिषी भवेत् ॥३०६॥
द्वितीया रुक्मिणी ख्याता, भीमभूपस्य देहजा। शिशुपालं नृपं हत्वा, या नीता विष्णुना हठात् ॥३०७॥
तृतीया जाम्बुवतीति, सुसमेति चतुर्थिका। पद्मावती ततोऽन्याहि, गौरी गान्धारिका तथा ॥३०८॥
अष्टमी भुवि विख्याता, लक्ष्मीमत्यभिधानिका। अष्टाभिः पट्टराज्ञीभिः, राजते माधवस्तदा ॥३०९॥
अन्याः षोडश सङ्ख्याताः, सहस्रप्रमिताः स्त्रियः। सर्वाभिस्ताभि रामाभिः, सुखं भुङ्क्ते जनार्दनः३१०
प्रद्युम्नादयः पुत्राः, सञ्जाता बहवोऽस्य च। अनरुद्धप्रमुखाः पौत्राः, जातास्ते कृष्णभूपतेः ॥३११॥
कण्टकैः रहितं राज्यं, शत्रुभिः परिवर्जितम्। प्रत्यहं कुरुते राज्यं, कृष्णः खण्डत्रयोद्भवम् ॥३१२॥
साधयन् विविधान् देशान्, दण्डयन् न्यायवर्जितान्। तोषयन् परमाऽभीष्टान्, चक्रे राज्यं चिरं नृपः ३१३
जरासङ्धं नृपं हत्वा, कृत्वा सङ्ग्राममुत्कटम्। चक्ररत्नं ततः प्राप, सरत्नैः सप्तभिर्युतम् ॥३१४॥
षट्पञ्चाशद्विसंख्याता, कुलकोटयाहि विश्रुता। यादवानां तदा जाता, वृद्धिरेतावती भुवि ॥३१५॥
एकदात्र सभामध्ये, निविष्टा यादवा घनाः। बलदेवादयः सर्वे, वसुदेवादयस्तथा ॥ ३१६ ॥
कथा प्रस्तावतो जाता, पुरुषार्थप्रशंसिनी। एकेन पाण्डवास्तत्र, बलढ्या हि प्रशंसिताः ॥ ३१७ ॥

अपरेण वसुदेवोऽत्र, बलदेवोऽपरेण तु। अपरैर्वासुदेवो वै, नाऽपरो बलवान् भुवि ॥ ३१८ ॥
एवं सर्वेषु भूपेषु, शंसितेषु यथायथम्। बलदेवस्तदा प्राह, स्मितं कृत्वा मनागपि ॥ ३१९ ॥
भवद्भिर्मूढचित्तैस्तु शंसिते हि वृथाऽत्र किं। नेमिनाथो जिनेन्द्रोऽसौ, वर्तते यत्र संस्थितः ॥३२०॥
कोटिसङ्ख्यैर्वराकैः किं, किं नृरुपधारकैर्वृथा।अनुपमसहावीर्यो, नेमिनाथो जिनेश्वरः ॥ ३२१ ॥
यत्राऽसौ वर्तते देवो, तत्र को बलवान् भुवि। मृगेन्द्रो वर्तते यत्र, तत्र को हि मृगादयः ॥३२२॥
प्रशस्यमानं बहुशः, बलं दृष्ट्वा जनार्दनः। चेतसा कोपमासाद्य, बाह्ये स्मित्वा जिनं जगौ ॥३२३॥
शृणु नेमि महाबाहो !, परं पौरुषमावयोः। परीक्षा चाधुना नूनं, कृत्वा मल्लमयं मृधम् ॥ ३२४ ॥
कच्छयित्वा समुत्तस्थौ, ताडयित्वाऽथ माधवः। नेमिनाथं जगादेवं,शीघ्रमुत्थीयतां त्वया॥ ३२५ ॥
तदा नेमिकुमारोऽपि, जगाद धौक्षुजं प्रति। जनेषु दृश्यमानेषु, मल्लयुद्धं न युज्यते ॥ ३२६ ॥
मल्लयुद्धे कृते नूनं, लघुता स्यादावयोः। गोपालानामिदं युक्तं, वरं बालनमावयोः ॥ ३२७ ॥
वलिते पुरुषे यत्र, प्रतिष्ठा तत्र वै गता। किञ्चिदत्र भणिष्यामि, तवाऽहं हर्षपुरणे ॥ ३२८ ॥
पादौ मे पादपीठाढ्ये, त्वया च चाल्यते यदा। तदा सर्वेषु युद्धेषु, जितोऽहं सदसि त्वया ॥३२९॥

तदा प्रधान्य कृष्णोऽसौ, धृत्वा पादे दृढं जिनं। वलेन कर्षयामास, स्थानाद् नो चलितः कियत् ॥३३०॥
कृष्णं खिन्नवलं दृष्ट्वा, नेमिनाथो जगाविति। स्वास्थ्यत्वेन त्वया स्थित्वा, वालनीयः करो मम ॥३३१॥
तदा कृष्णः करं धृत्वा, वालयामास वेगतः। ववले न करस्तेन, विष्णुना तिलमात्रतः ॥३३२॥
तत्र म्लानमुखं दृष्ट्वा, नेमिनाथोऽपि श्रीधरम्। जगाद् मा कृथा खेदं, मम वामकराङ्गुली ॥३३३॥
त्वया निजवलेनाऽपि, नाम्यतां नाम्यतां द्रुतम्। हारितं हि मया नूनं, तदा सत्यं वचो मम ॥३३४॥
कृष्णो निजकराभ्यां तु, धृत्वा तामङ्गुलिं दृढम्। शक्तः सर्ववलेनाऽपि, नामितुं नाऽङ्गुलिं स च ॥३३५॥
अङ्गुल्या विलग्नं कृष्णं, नेमिमुत्पाट्य वेगतः। क्षणेन तोलयामास, कृत्वा हिन्दोलिकां क्रियाम् ॥३३६॥
तदा खे दुन्दुभिनादो, जातो जयजयारवः। अनन्तवीर्यवाँस्त्वं हि, त्वदन्यो नाऽपरो बली ॥३३७॥
पुष्पवृष्टिः रत्नवृष्टिः, कृता सुरगणैस्तदा। विषादं परमं प्राप्य, कृष्णो म्लानमुखोऽभवत् ॥३३८॥
तदोत्थाय वलेनाऽथ, चक्रे मन्त्रं जनार्दनः। नेमिनाथोऽतिवलवान्, मम राज्यं हरिष्यति ॥३३९॥
इति संमन्त्र्य तौ तावत्, नैमित्तिकमपृच्छयत्। ततो नैमित्तकः प्राह, शृणु कृष्णः वचो मम ॥३४०॥
निमित्तं प्राप्य हि सोऽयं, वैराग्यं खलु यास्यति। चिन्तां राजमयीं त्यक्त्वा, नेमिर्दीक्षां ग्रहिष्यति ३४१

नैमित्तकवचः श्रुत्वा, कृष्णोऽपि चिन्तया स्थितः। तावद्दतुः समायतो, वसन्त नामको भुवि ॥३४२॥
वसन्तेऽथ समायाते, जनानां प्रमदोऽजनि। कामिनी कामसम्पूर्णे, जाता कामपताकिका ॥३४३॥
वियोगेन प्रतप्तानां, दुःखं जातं महत्तदा। कामीनां कामिनीनां च, मानभङ्गस्तदाऽजनि ॥३४४॥
सहकारेषु च सञ्जाता, मञ्जरी जनवल्लभा। कोकिलानामप्याविर्भूच्छब्दः सर्वजनप्रियः ॥३४५॥
किंशुकाः पुष्पिताः सर्वे, वनकुञ्जे तथा वने। विरहाऽनलतप्तानां, मनांसि च विलोक्यते ॥३४६॥
चम्पकाः पुष्पितास्तत्र, पाटलास्तु वने वने। सरोजानि तडागेषु, वसन्ते जातियुथिकाः॥ ३४७॥
एवमादीन्यनेकानि, पुष्पजातीनि तत्र वै। विकसितानि परां दध्रे, शोभां काले मनोरमाम् ॥३४८॥
तस्मिन् काले तदा कृष्णः, क्रीडनार्थं वने ययौ। गोपीभिः सहितस्तावन्नीत्वा नेमिजिनेश्वरं ॥३४९॥
पूर्वं तत्र वने भृत्यैः, रचिताः सन्ति दीर्धिका। श्रीखण्डैर्मलयोद्भूतैः, पूरितास्ताः सकङ्कुमैः ॥३५०॥
पूजा सिन्दूरजास्तत्र, रचिता सौगन्धिरेणुजा। पुष्पपुञ्जा कृताः सन्ति, कामिनां कामवर्द्धिका ॥३५१॥
ततः कृष्णः सगोपीको, नेमिनाथेन संयुतः। गत्वाऽथ क्रीडयामास, सौख्यभेदैर्नवैः नवैः ॥३५२॥
गोपीभिश्च तदा कृष्णः, छाद्यते च मुहुर्मुहुः। कृष्णेनाऽपि हि गोप्योऽपि, क्रियते तु तथाविधाः ॥३५३॥

वल्गनं छण्टनं चैव, वसन्तस्य च गायनम्। गोपीभिश्च ततश्चक्रे, जनचेतोऽभिरञ्जनम् ॥३५४॥
रमित्वा विविधां क्रीडां, कृष्णोऽसौ निर्गतो द्रुतम् । गोपीनां हि ततो दत्वा, शिक्षां नेमिविमोहने॥३५५॥
गते कृष्णेऽथ गोप्योऽपि, क्रीडितुं नेमिना सह । प्रारेभे भक्तिभारेण, पूरिताः निजमानसे ॥ ३५६॥
हास्यं हि विविधं चक्रुर्देवरं प्रति सादराः। चक्रे नानाविधैर्वाक्यैः, कामोद्दीपनकैस्तदा ॥ ३५७॥
त्वं पण्ढोऽसि नूनं देव !, नारीं यो न समीहसे। तव भ्रातुर्वयं पश्य, सहस्रप्रमिता स्त्रियः ॥३५८॥
एकनार्या हि निर्वाहं, कर्तुं नैव समर्थता। पुरुषार्थस्य हीनस्य, तव का शूरता विभो ! ॥३५९॥
इति नानाविधैर्वाक्यैर्हसित्वा रमिता चिरम् । नेमिनाथेन गोप्योऽपि, ततो बाह्ये विनिर्गताः ॥ ३६० ॥
नेमिनाथो बहिर्तस्मान्निर्गत्य जलमध्यतः। जलेनार्द्रं निजं वस्त्रं, मुक्त्वा प्राह जिनेश्वरः ॥३६१॥
हे जाम्बुवति! मे वस्त्रं, जलहीनं द्रुतं कुरु। मा विलम्बय वेलां त्वं, पश्चाद् यामो गृहं निजम् ॥३६२॥
तेन वाक्येन संरुष्टा, जगौ जाम्बवती प्रभुम्। निजाङ्गनां विहायान्यामिदं कार्यं न दीयते ॥३६३॥
सुदर्शनं तु यच्चक्रं, करे धृत्वा तु भ्राम्यति। शय्यामारोहणं वै यो, पाञ्चजन्यं च पूरयेत् ॥३६४॥
शार्ङ्गं धनुराकृष्य, ज्यारूढं कुरुते स्वयम्। स मे कार्यं वरं दत्ते, नाऽपरः क्षुद्रशक्तिकः ॥ ३६५ ॥

अस्माकं तु कुलाधीशस्त्वमेव हि न संशयः। शिवादेवीति तं प्राह, शृणु कृष्ण वचो मम ॥३७८॥
त्वदीयत्तं हि सर्वं नः, कर्त्तव्यं वर्तते सुतः। अत एव विवाहोऽपि, मेलनीयस्त्वयैव हि॥ ३७९॥
त्वत्कृतं मे कुले वत्स!, केनाऽपि लोप्यते न हि। निजे चित्ते विमृश्यैवं, कर्तव्यं तु यथोचितम् ॥३८०॥
शिवदेवीवचः श्रुत्वा, केशवोऽपि बलाऽन्वितः। गत्वोग्रसेनभूपस्य मन्दिरं गुण मन्दिरम्॥ ३८१॥
गतौ तौ जीर्णप्राकारे, मानितौ तेन भूभुजा। सन्तोषं परमं प्राप्तौ, बलनारायणौ तदा ॥३८२॥
कृष्णोऽस्य याचयामास, पुत्री राजीमती सती।उग्रसेनोऽपि नेमेस्तु, ददे प्रेमभरालसः ॥३८३॥
याचयित्वा सुतां तस्य, नीत्वा लग्नं तदोत्तमम्। रचित्वा जीवघातं तु, समायातो हरिर्गृहे ॥३८४॥
विवाहस्योत्सवं सोऽपि, प्रारेभेऽत्र घनागमे। मिलिताः स्वजनास्तत्र, केशवेन समाहूताः ॥३८५॥
उग्रसेननरेन्द्रेण वरस्याह्वानिका नराः। द्वारिकायां तु सोत्साहाः, प्रेषितास्ते समागताः ॥३८६॥
वरस्याऽऽह्वानिकान् दृष्ट्वा, यादवानां हि योषितः। गानं भोजानिकां चक्रुः, भक्तिंतेषां यथोचिताम् ॥३८७
भोजयित्वा विविधाऽन्नेन, वरस्याऽऽह्वानिकान् नरान्। निर्गता वेगतः सर्वे, यादवा हर्षपूरिताः ॥३८८॥
रथोऽत्र विविधैरश्वैर्भूषयित्वा समाहृतः। विभूष्य विविधे कल्पैः, रथे नेमिर्निवेशितः ॥३८९॥

रथा गजा हयाःश्वाश्च, चलिताश्च पदातयः । वाजित्राणा च निर्घोषैः, श्रूयते श्रवणैर्नहि ॥ ३९० ॥
कृष्णोऽपि हि किरन् दानं, याचकानां विशेषतः। विभूत्या महता याति, समायातो पुराद्बहिः॥३९१॥
जानिसमागतिं श्रुत्वा, राजपुत्राऽतिवेगतः । श्रृङ्गारं विविधं चक्रे, स्वामिनं प्राति सादराः ॥३९२॥
तोरणेऽथ समायातो, जिनः परिजनाऽन्वितः । पशूनां मिलितानां हि, शब्दं सुश्राव धर्मधीः ॥३९३॥
श्रुत्वा स्वसारथिं प्राह, जीवाः किं कारणादिमे। मिलितास्ते दिनशब्दं, कुर्वन्ति करुणावहम्॥३९४॥
ततः सारथिना प्रोक्तं, शृणु नाथ! वचो मम । विवाहे ते समानीताः, पशवोऽनेकशो ध्रुवम् ॥३९५॥
भविष्यति वधोऽमीन, पशूनां भक्तिहेतवे । ते एते पशवो नाथ! मेलिताः सन्ति भुभूजा ॥ ३९६॥
जिनः तस्य वचः श्रुत्वा, चचले करुणापरः । पश्यत्सु सर्वलोकेषु, चालयित्वा निजं रथं ॥ ३९७ ॥
नेमिनाथेऽथ चलिते, जनैः कलकलकृतः । उग्रसेनादिभूपानां, जातं दुःखं महत्तदा ॥ ३९८ ॥
कोलाहलं समाकर्ण्य, राजपुत्री सुदुःखिता। निर्गता पृष्ठतो वेगाद्रुदन्ती करुणावहम् ॥ ३९९ ॥
गनोगेर्गिगमाणोऽपि, न स्थितोऽसौ जिनेश्वरः । लोकैः पृष्टः कथं नाथ ! तोरणाद्वलितं त्वया ॥४००॥
""दा जगाद नेमीशो, लोकाः शृण्वन्तु मे वचः। निरापराधजीवानां, वधोऽयं क्रियते कथम् ॥४०१॥

विवाहेऽत्र फलं दृष्टं, प्रथमं जीवघातजं । परिणीतेन जानेऽहं, अग्रे किं मे भविष्यति ॥४०२॥
तदैव दूषणं दत्तं, लोकैः सर्वै च विष्णवे। नरायणो जनोक्तिं तां, श्रुत्वा प्राह जिनेश्वरम् ॥४०३॥
लोकापवादो जातोऽत्र, वत्स त्वं मे निवारय । ममोपरि कृपां कृत्वा, विवाहं कुरु उत्तमम् ॥४०४॥
सम्बोध्य विविधै र्वाक्यै–र्विमुच्य पशुराशयः । उज्जयन्तं गिरिं प्राप, वेगाद्वैराग्यपूरितः ॥४०५॥
लोकान्तिकैः सुरैरेत्य, जिनेन्द्रोऽपि प्रबोधितः। मनोज्ञां शिबिकां कृत्वा, नेमिनाथो निवेशितः ॥४०६॥
उज्जयन्तं गिरिं नीत्वा, मुक्तः सहस्रिके। वने सर्वकल्पपरित्यागं, चक्रे श्रीजिननायकः ॥ ४०७ ॥
मुर्द्धजानां तदा लोचं, चक्रेऽसौ पञ्चमुष्टिभिः। शक्रोऽपि मुर्द्धजान् नीत्वा निदधे क्षीरवारिधौ ॥४०८॥
बाह्याऽभ्यन्तरतश्चाऽपि, त्यक्त्वा सङ्गं जिनेश्वरः। सिद्धानां प्रणतिं कृत्वा, दीक्षां जग्राह पावनीम् ॥४०९॥
तत्र देवनिकायास्तु वासवाद्याः समागताः । दीक्षामहोत्सवं कृत्वा, याताः स्थानं यथायथम् ॥४१०॥
नरेन्द्राणां सहस्रेण, नेमिनाथस्तपोऽग्रहीत्। ध्याने स्थित्वा चकाराऽसौ, पारणं तृतीये दिने ॥४११॥
श्रीमद्वीरपुरे रम्ये, वरदत्तगृहे वरे । पारणं नेमिनाथस्य, परमान्नेन निर्मितम् ॥४१२॥
पद्पञ्चाशद्दिनैस्तस्य, केवलज्ञानमुद्गतम्। घातिकानां क्षये जाते, ध्यानपावक संचयेत् ॥४१३॥

धवले चाऽश्विने मासे, मनोज्ञे प्रतिपद् दिने । पूर्वाह्ने जिनचन्द्रस्योत्पन्नं ज्ञानं हि केवलम् ॥४१४॥
देवौघैर्वासवैश्च, निर्मिता समवसृतिः । कोष्ठैर्द्वादशभिस्तत्र, गिरौ रेवतके गिरौ ॥४१५॥
त्रिभिः शालैस्तदा रेजे, सार्द्धयोजनविस्तरं । भद्रपीठकृतोद्योतं, सरणं समवादिकम् ॥४१६॥
विष्टरेऽत्र निविष्टोऽसौ, छत्रत्रयविराजितः । वीज्यते च सुरौघेण, चतुस्त्रभिश्चचामरैः ॥४१७॥
तस्यैकादश सङ्ख्याता, जाता गणधरा वराः । ततोऽपि द्वारिकालोकः, समस्तोऽपि समागतः ॥४१८॥
उत्पन्नं केवलं श्रुत्वा, कृष्णाद्या यादवास्तदा । नरनारीसमूहेन, सर्वेऽप्येते समागताः ॥४१९॥
राजीमत्यादयस्तस्य जातं सद्धर्महेतवे । आर्यिकाणां महावृन्दं, पठनादिगुणान्वितम् ॥४२०॥
धर्मं जिनेश्वरः प्राह, भव्यराशिप्रबोधकम् । सर्वलक्षणसंयुक्तं, सागारेतरभेदतः ॥४२१॥
भव्यराशीन् ततस्तत्र, बोधयित्वा जिनेश्वरः । अंतो विहरणं चक्रे, देशेषु विविधेषु च ॥४२२॥
स्वामिविहरणं श्रुत्वा, नीत्वा कृष्णः सहोदरान् । यतिवेषधरांश्चक्रे, सम्बोध्य च पुनः पुनः ॥४२३॥
समायातो जिनेन्द्रोऽसौ, पुनः रैवतकाऽचलम् । तदा सुरैः कृतं तत्र, सरणं समवादिकम् ॥४२४॥
सर्वोऽपि द्वारिकालोको, वन्दनार्थं समाययौ । देवक्यादि सुनारीणां, वृन्दं तत्र समागतम् ॥४२५॥

जिनं नत्वा ततः स्तुत्वा, पूजयित्वा विधानतः। धर्मं श्रुत्वाऽथ देवक्या तत्र पृष्टो जिनेश्वरः ॥४२६॥
जातरूपधरा धीरा, भगवान् ये मुनिपुङ्गवाः। एकस्मिन् दिवसे ते हि, भुञ्जन्ते किं पुनः पुनः ॥४२७॥
जिनेन्द्रोऽसौ तदाप्युचे, श्रीजिनेन्द्रवृत्ताऽन्विता। तेषां नो भोजनं युक्तं, दिनमध्ये पुनः पुनः ॥४२८॥
मद्गेहेऽथ समायातं, मुनियुग्ममनोहरं। वारत्रयं तमेवात्र, भोजनार्थं पुनः पुनः ॥४२९॥
वारं वारं नचाऽऽयातं, तमेव मुनियुग्मकं। पुत्रयुग्मत्रयं विद्धि, तवैवेऽति जिनोऽवदत् ॥४३०॥
शंसयन्तं निराकृत्य, देवकीसुतमोहतः। मुनीनां पादयोर्नत्वा, हर्षेणाश्रुरमोचयत् ॥ ४३१ ॥
तद्वृत्तान्तं परं ज्ञात्वा, नरनार्यस्तथाविधं। प्रबोधं परमं प्राप्ता, संसारोत्तारकारणम् ॥४३२॥
केचिद् दीक्षां वरां भेजुः, केचिदणुव्रतानि च। सम्यक्त्वमपरे प्रापुः, जिनपूजादिकं परम् ॥४३३॥
देवकी पृष्टवान् नेमिं, भवान्निजपुरातनान्। ततः श्री जिनचन्द्रेण, सर्वे ते प्रतिपादिताः ॥ ४३४ ॥
कृष्णस्याऽष्टमाहिषीभिः, पृष्टोऽसो जिननायक। कथय त्वं प्रभोऽस्मभ्यं, पुण्यापुण्यं पुरातनं ॥४३५॥
तत्सर्वं जिननाथेन, विशेषात् प्रतिपादितम्। वलदेवेन तत्रैव, पृष्टोऽसौ जिननायकः ॥४३६॥
उत्पत्तिस्तीर्थनाथानां, तथैव चक्रवर्तिनाम्। बलानां वासुदेवानां, तथैव प्रतिचक्रिणाम् ॥४३७॥

जगाद भगवान् देवं, विशेषात्सर्वमेव हि । ततो गजकुमारोऽपि, श्रुत्वा वैराग्यमागतः ॥४३८॥
वने गत्वा ततो नीत्वा, दीक्षां च पावनीं तथा । उपसर्गजयं कृत्वा, निर्वाणं परमं गतः ॥४३९॥
कथयस्व प्रभो ! मह्यं, कृपां कृत्वा ममोपरि । जातस्य हि ध्रुवो मृत्युः, संसारे सारवर्जिते ॥४४०॥
उत्पत्तेश्च विनाशोऽस्ति, तवैव वचनं विभो !। कृष्णस्य हि कथं मृत्युः, भविता केन हेतुना ॥४४१॥
द्वारावत्या विनाशो वा, कथं चाऽत्र भविष्यति । केन वा हेतुना केन, भविता मे निरूपय ॥४४२॥
जगादोऽथ जिनेन्द्रोऽपि, सत्यं पृष्टं त्वया नृप।यद्भाव्यं तद्भविता च, किं मया प्रतिपाद्यते ॥४४३॥
तथापि बलवान् प्राह, सत्यमेव प्रकथ्यतां । अवश्यं भावि भावानां, प्रतीकारो न विद्यते ॥४४४॥
अत्याग्रहवशात् स्वामी, जगाद बलिनं प्रति । द्वैपायनमुनीन्द्राच्च, पुरी मद्यस्य हेतुना ॥४४५॥
अथतो द्वादशे वर्षे, विनश्यति सुनिश्चितम् । जरत्कुमारहस्तेन, कृष्णस्य मरणं तदा ॥४४६॥
इत्याकर्ण्य जिनेन्द्रस्य, वचनं हि ततो बली । समागत्य पुरीमध्ये, कृष्णस्याऽग्रे न्यवेदयत् ॥४४७॥
कृष्णेनाऽपि पुरी मध्ये, घोषणा दापिता तदा। यः कोऽपि मद्यं कुरुते, राजद्रोही स एव हि ॥४४८॥
यानि मद्यस्य भाण्डानि, मद्योपकरणानिच। तानि सर्वाणि त्याज्यानि, वनकुञ्जेषु निश्चितम् ॥४४९॥

ततो विष्णोश्च वाक्येन, सर्वमद्योपचारकं । निक्षिप्तं गिरिकुञ्जेषु, कण्टकेषु ध्रुवं तदा ॥४५०॥
कृष्णो वाक्यमिदं प्राह, सर्वेषामग्रतस्तदा । स्वकीयो परकीयोऽपि, दीक्षां गृह्णातु यो ध्रुवम् ॥४५१॥
गृह्णातु स च वेगेन, वारयामि न निश्चितम् । इतिकृष्णवचः श्रुत्वा, सन्तुष्टाः सकला जनाः ॥४५२॥
कृष्णस्याष्टमहीष्यश्च, सर्वास्ता दीक्षितास्तदा । दीक्षितौ कुमरौ वीरौ, ततः प्रद्युम्नभानुकौ ॥४५३॥
ततो जराकुमारोऽपि, कुटुम्बस्य निवेद्य च । यातो देशान्तरं दूरं, स्थितः प्रच्छन्नवेषभाक् ॥४५४॥
लुब्धकस्य तदा वेषं, नीत्वाऽसौ हि वने स्थितः । प्रत्यहं तत्र वसति, एकाकी विजने वने ॥४५५॥
द्वैपायनमुनीन्द्रोऽपि, गतो देशान्तरे तदा । जिनेन्द्रवचनं श्रुत्वा, निराकर्तुं हि मूढधीः ॥४५६॥
एवं तत्र गते काले, जिनेन्द्रप्रतिपादिते । वनेऽथ क्रीडितुं याता, यादवानां कुमारकाः ॥४५७॥
रमित्वा हि चिरं कालं, तृष्णयाऽकुलितास्तदा । जलं सर्वत्र पश्यन्तो, भ्रमन्ति वनमध्यतः ॥४५८॥
टङ्केषु स्थितं यच्च, मद्यवस्तु पुरातनम् । वर्षाकालजलेनैव, नवीनमिव चाऽभवत् ॥ ४५९ ॥
जलभ्रान्तिं तु कुर्वाणैः, तत्पीतं यदुनन्दनैः । जलं पीत्वा परं तुष्टा, स्खलितास्ते गृहं प्रति ॥४६०॥
चक्रुर्नानाविधां चेष्टां, मत्ताः काऽपि च यादवाः । द्वारिकाबाह्यभूम्यां ते, मदोन्मत्ता समागताः ॥४६१॥

तावद् द्वैपायनो योगी, लोकानां सुखकारणं। गतः कालो जिनेनोक्तः, समायातो निवेदितुम् ॥४६२॥
याने स्थितं मुनिं दृष्ट्वा, यदूनां ते हि नन्दनाः। क्रोधेन ज्वलिताः सर्वे, स्मृत्वा तं कारणं तदा ॥४६३॥
मद्यपाने पुराजातं, वैरं स्मरति देहिनाम्। पाषाणैस्ताडयामास, सर्वे ते मुनिपुङ्गवम् ॥ ४६४ ॥
मस्तकप्रायपुञ्जोऽसौ, जातो दृषन्मयस्तदा। तथापि क्रोधं नो दध्रे, मुनिराट् ध्यानसंस्थितः ॥४६५॥
मातङ्गमस्तके तं च, चटाप्य यदुपुङ्गवाः। मूत्रं ते कारयामासुः, तदा क्रोधं गतो मुनिः ॥ ४६६ ॥
भूमण्डले पपाताऽसौ, क्रोधाऽरुणनिरीक्षणः। तदा कण्ठगताः प्राणाः, यादवास्ते गता पुरीम् ॥४६७॥
तावत्केनाऽपि कृष्णस्य, बलस्याऽपि निवेदितं। वृत्तान्तं राजकुमरैः, मुनीन्द्रस्य कृतं हि यत् ॥४६८॥
बलनारायणौ वेगात्, प्राप्तौ मुनिपदान्तिकं। पूर्वकाले जिनेन्द्रस्य, वाक्यं स्मृत्वा ततोऽनघम् ॥४६९॥
आगत्य मुनिपादौ तौ, प्रणिपत्याऽतिभक्तितः। उपविश्य मुनेश्चाग्रेऽपि, विनयाद्वाक्यमुचतुः ॥४७०॥
त्वं नाथ! प्राणिनां त्राता, दयया त्वं विभूषितः। अज्ञानैर्बालकैर्यच्च, कृतं ते क्षमतां विभो! ॥४७१॥
एकेन्द्रियादयो जीवाः, स्थावरा-त्रसभेदतः। सर्वे ते पालिता नाथ!, क्रोधस्ते नैव युज्यते ॥४७२॥
ये ये क्रोधयुता जीवाः, ते ते यान्ति च दुर्गतिम्। यतीनां क्रोधश्चाण्डालस्त्याज्योऽसौ हि त्वया विभो!४७३

इत्यादिविविधैर्वाक्यैस्ताभ्यामुक्तोऽप्यसौ मुनिः। न तत्याज निजं क्रोधं, परं दुर्गतिकारणम् ॥ ४७४ ॥
अत्यन्तं शीतलैर्वाक्यैरुक्तोऽपि मुनिपुङ्गवः। न मुमोच पुरीं सर्वां, क्रोधदष्टद्विजच्छदः ॥४७५॥
समस्यथा हि तौ मुक्तौ, मुनिना नगरीं गतौ। गत्वा तान् नगरीलोकानूचे कृष्णो दयापरः ॥४७६॥
शृण्वन्तु भो! जना मे हि, वाक्यं धृत्वा हृदि निजे। नश्यन्तु वेगतः सर्वे, जीविते ये प्रिया नराः॥४७७॥
ततः साम्बकुमाराद्या, गत्वा रैवतकाऽचले। दीक्षां बभ्रुः जिनेन्द्रस्य, श्रीमन्नेमिजिनस्य ते ॥४७८॥
तावन्मृत्वा स योगीन्द्रो, जातो वह्निकुमारकः। अवधिज्ञानतो ज्ञात्वा, वृत्तान्तं यदुभिः कृतम् ॥ ४७९ ॥
वेगाद् द्वारावतीं प्राप्य, प्रतोल्यादि ददौ तदा। स्थाने स्थाने ततश्चाग्निं, मुक्त्वा तां ज्वालयत् पुरीम्॥४८०
जगाद विबुधस्तत्र, लोका शृण्वन्तु मे वचः। पक्षिणामपि नो गन्तुं, दास्ये द्वैपायनो मुनिः॥४८१॥
नारायणो बलेनाऽथ, संप्रधार्य पुनः पुनः। पितरौ रथमारोप्य, प्रतोलीं वेगतो गतः ॥४८२॥
कपाटौ स्तम्भितौ तेन, दैत्येनाऽपि हि कोपतः। कृष्णेनोद्घाटितौ तौ हि, स्तम्भितोऽत्र रथस्तदा॥४८३॥
रथं गते तदा कृष्णे, कपाटौ स्तम्भितौ पुनः। देवो जगाद हे कृष्ण! किमायासं करोषि भोः॥४८४॥
समस्तायां हि पुर्यां तु, मुक्तौ तु बलकेशवौ। अपरस्य न मोक्षोऽस्ति, सत्यं नूनं वचो मम॥४८५॥

श्रुत्वाऽथ बैद्युधं वाक्यं, बलो गत्वाऽपि सागरे। हलेन चापं दत्त्वाऽसौ, नीरं नीन्ये पुरीं प्रति ॥४८६॥
तदा नीरं तु सञ्जातं, पापात्तैलमयं क्षणात्। दैवे पराङ्मुखीभूते, न पांण्डित्यं न शूरता ॥४८७॥
वसुदेवोऽपि देवक्या, कृत्वाऽऽहारविवर्जनम् । गतः स्वर्गं ह्यसौ वेगाज्जिनधर्मपरायणः ॥ ४८८ ॥
एकाकिनौ महावीरौ, पुर्या बाह्ये विनिर्गतौ। सर्वाऽपि नगरी तावज्ज्वालिता वेगेन वह्निना ॥ ४८९ ॥
परस्परं समालिङ्ग्य, बलनारायणौ तदा। विलापं परमं चक्रुः, दुःखपीडितमानसौ ॥४८०॥
मन्दं मन्दं ततो यातौ, धृत्वा धैर्यं नरोत्तमौ। भूत्वा क्रमेण तौ प्राप्तौ, तं कोसाम्ववनं तदा ॥४८१॥
कृष्णोऽपि तृष्णया व्याप्तो, जातोऽत्यन्तं दुराशयः। बलभद्रं तदा प्राह, नीरमानीयतां त्वया ॥४९२॥
बलभद्रो जलाऽऽनेतुं, यातो विष्णुं तरोरधः। मुक्त्वाऽतिवेगतः मार्गे, पश्यन्ति मृगतृष्णकान् ॥४९३॥
गत्वा जलाश्रये वेगात्, तत्रस्थनलिनीदलैः। नीरं नीत्वा समायातो, तावत् वृत्तं हि चाऽपरम् ॥४९४॥
बलदेवे गते कृष्णो, यदाऽसौ शयितो भुवि। तावत्तत्र समायातो, जरत्कुमारनामकः ॥४९५॥
अंदपद्मे स्थितं पद्मं, विलोक्याऽसौ व्यचिन्तयत्। अचलः कर्णरूपेण, नेत्रं जीवस्य दृश्यते ॥४९६॥
आकर्णाऽऽकृष्टबाणेन, तेन पादतले हतः। तदा कृष्णोऽप्यसौ शब्दं, कृत्वोत्तस्थौ हि वेगतः ॥४९७॥

केन पापेन दुष्टेन, कृतं कर्माऽतिनिन्दितम्। हतोऽहं विजनेऽरण्येऽत्र निष्कारणवैरिणा ॥ ४९८ ॥
कृष्णवाक्यं समाकर्ण्य, कुमारोऽपि समागतः। कृष्णं विलोक्य निहतं, दुःखेन मूर्च्छितोऽभवत् ॥४९९॥
हा! हा! ताताऽत्र किं जातमुद्दिश्य तव कारणं। योऽहं दुष्ट वने यातस्तत्र जातं किमीदृशम् ॥५००॥
यद्यत् पुरातनं कर्म, तत्कोऽत्र स्फेटितुं क्षमः। कृष्णोऽपि भ्रातरं ज्ञात्वाऽप्यालिलिङ्गेति दुःखतः ॥५०१॥
वत्स! पुरातनं कर्म, भुङ्क्ते प्राणी सुनिश्चितम्। मा कृथा त्वं वृथा दुःखं, गच्छाऽस्माकं प्रदेशतः ॥५०२॥
बलदेवो जलं नीत्वा, समेष्यत्यत्र वेगतः। त्वां दृष्ट्वा चातिवेगेन, हनिष्यति न संशयः ॥५०३॥
जरत्कुमारस्तत्राऽऽह, किमत्र जीवितेन मे। न गमिष्याम्यहं भ्रातः! प्राणत्यागं करोतु सः ॥५०४॥
कृष्णो जगाद हे वत्स! रक्ष वंशपरिक्षयं। पाण्डवानां समीपे त्वं, गत्वा दक्षिणभूमिकां ॥५०५॥
तेषां निजं हि वृत्तान्तं, द्वारिकाजं निवेदय। ममेदं कौस्तुभं नीत्वा, दर्शय त्वं प्रतीतये ॥५०६॥
कौस्तुभं तं ततो नीत्वा, बाणं निष्काश्य पादतः। जरत्कुमारोऽतिवेगेन, गतोऽसौ पाण्डवाऽऽस्पदम् ॥५०७
यावज्जीवपरित्यागं, कृत्वाऽसौ पतितो हरिः। तावत्तत्र समायातो, बलभद्रो जलान्वितः ॥६०८॥
वासुदेवं हि मेदिन्यां, दृष्ट्वा तं पतितं बली। चिरं दुःखातुरश्चिन्तां, कर्तुं तत्र समुद्यतः ॥६०९॥

हतः केनाऽपि दुष्टेन, कृष्णोऽकारणवैरिणा। मुक्तकण्ठं तदा चक्रे, बलोऽसौ परिदेवनम् ॥५१०॥
बलः कृष्णं वचः प्राह, श्रृणु भ्रातः! मयोच्यते। न भुक्तं हि जलं नूनं, त्वामभुक्त्वा परं मया ॥५११॥
इत्युक्त्वा विविधैर्वाक्यैर्विष्णुमुक्त्वा तदा बली। कण्ठे धृत्वा निजे तं हि, मन्दं मन्दं वनेऽभ्रमत् ॥५१२॥
कच्चिन्नीत्वा हि तं शेते, कच्चिदङ्के न्यरोपयत्। कच्चिन्निरक्षरं ब्रुते, मोहाऽऽविष्टो बली तदा ॥५१३॥
कच्चिद्धास्यं कुरुतेऽसौ, गतश्चेष्टः पदे पदे। एकाकी न भयं दध्रे, वने वीरो यथा हरिः ॥५१४॥
अतो जरत्कुमारोऽसौ, गत्वा पाण्डवसान्निधिम्। वृत्तान्तं यादवोद्भूतं, सर्वं तेभ्यो न्यवेदयत् ॥५१५॥
विलापं परमं चक्रुः, पाण्डवाः दुःखपूरिताः। स्नानं कृत्वा जलं दत्वा, चिन्तां कर्तुं समुद्यताः ॥५१६॥
जरत्कुमारं सन्मान्य, स्त्रीणां वृन्दं व्यवहापयत्। चतुर्मासं स्थितास्तत्र, बहुकष्टेन पाण्डवाः ॥५१७॥
चतुर्मासे ततोऽतीते, सर्वे ते पाण्डुनन्दनाः। जरत्कुमारं पुरस्कृत्य, सकुटुम्बा विनिर्गताः ॥५१८॥
बलं विलोक्यमानास्ते, भ्रमन्तो मेदिनीं तदा। क्रमात् तत्र समायाता, यत्राऽसौ वर्तते बली ॥५१९॥
विलोक्य बलिनं सर्वे, ग्रथिलं हि शवान्वितं। आगताः पाण्डवास्तत्र, समीपं बलिनस्तदा ॥५२०॥
सैन्येन महता सार्द्धं, समायातान् विलोक्य सः। बलभद्रोऽपि कोपेन, युद्धार्थं सन्मुखे स्थितः ॥५२१॥

वलं क्रोधयुतं दृष्ट्वा, सर्वे ते पाण्डुनन्दनाः । यानादुत्तीर्य वेगाच्च, पतिताः पादपङ्कजम् ॥५२२॥

ततो नानाविधैर्वाक्यैः, बोधितोऽपि बली तदा । तेभ्योऽपि न ददौ सोऽपि, शवं संस्कारहेतवे ॥५२३॥

चलितोऽसौ वेगवत्तस्माच्छवं नीत्वा बलो यदा । तदा सारथिदेवोऽसौ, बोधनाय समागतः ॥५२४॥

स्थले पद्मं समारोप्य, सिञ्चनाय समुद्यतः । जलस्य मन्थनं तत्र, वालुकायाश्च पीलनम् ॥५२५॥

पयस्विन्यास्ततो शृङ्गे, पयोहेतोश्च दोहनं । दर्शितेषु विशेषेषु, ना बुद्धोऽसौ यदा बली ॥५२६॥

तदाऽसौ विषमे शृङ्गे, पर्वतस्य रथं वरं । चटाप्योत्तार्य वेगेन, भूम्यां नीत्वा हि भञ्जितो ॥ ५२७॥

भग्नं रथं समालोक्य, बलोऽसौ विबुधं जगौ । विषमं स्थानमुल्लङ्घ्य, भग्नोऽसौ भूतले कथं ॥५२८॥

देवो जगाद हलिनं, संगरे दुर्जयो यदा । मृतो विलोक्यते कृष्णो, न मृतोऽसौ तदा ध्रुवम् ॥५२९॥

सुप्तोऽपि विजनेऽरण्ये, बाणेनैकेन यो मृतः । जरत्कुमारमुक्तेन, तस्याऽत्र किमु युज्यते ॥ ५३०॥

श्रुत्वाऽथ वैबुधं वाक्यं, प्रतिबुद्धो हली तदा । तुङ्गश्वरगिरेर्मूर्ध्नि, नीत्वा संस्कारितो हरिः ॥५३१॥

दीक्षां जग्राह जैनेन्द्रीं, वैराग्येन तदा बलः । तपो नानाविधं कृत्वा, स्वर्गे देवाधिपोऽभवत् ॥५३२॥

उत्तरस्यां दिशि गत्वा, ततस्ते पाण्डुनन्दनाः । दीक्षां गृहीत्वा ते जैनीं, गताः नेमिपदान्तिके ॥५३३॥

यादवा मद्यदोषेण, सर्वनाशं यथा गताः । तदा सामान्यलोकस्य, दुःखस्य वर्णना हि का ॥५३४॥
मद्यं हि सर्वथा निन्द्यं, त्याज्यं वै बुद्धिशालिभिः । मद्यदोषेण ये ये हि प्राप्ता दुःखं नरा भुवि ॥५३५॥
कस्तांस्तान् गदितुं शक्तो, ज्ञानहीनो नरोऽपरः । मद्याद्वै नरकं यान्ति, जीवा संसर्गतोऽपि वा ॥५३६॥
मद्यपाने कुतः शौचं, मद्यं लोकेषु गर्हितम् । मद्यात्कुलविनाशं च, निन्द्यं मद्यं हि सर्वथा ॥५३७॥
षट्पञ्चाशत्कोटी च, कुलानि प्रथितानि वै । यादवानां परं दुःखं, प्राप्तं हि मद्यतो ध्रुवम् ॥५३८॥
यदुवंशक्षयं जातं, दग्धा हि द्वारिका तथा । एकेन मद्यदोषेण, मद्यं त्याज्यं ततो नृभिः ॥५३९॥
ज्ञात्वैवं सततं विवेकचतुरैः धर्मक्रियापालकै स्त्याज्यं मद्यमनेकदुःखजननं, लोकद्वये गर्हितम् ॥५४०॥
श्रीसर्वज्ञनिवेदितं बुधनुतं, कुर्वन्तु भव्या जनाः । संसारार्तिविनाशनं शुचितरं, सोमेत्र सौम्यं वृषं ॥५४१॥

इत्याचार्यश्रीसोमकीर्तिविरचिते सप्तव्यसनकथासमुच्चये मद्यफलवर्णनो नाम तृतीयः सर्गः ।

# ॥ वेश्याव्यसनविषये चारुदत्तकथानकम् ॥

अथ नत्वा गणाधीशं, श्रेणिको नाम भूपतिः । प्रपच्छ विनयं कृत्वा, वेश्याव्यसनजां कथाम् ॥१॥
वेश्याव्यसनजं दुःखं, केनाऽप्तं च कथं विभो ! । इति पृष्टे गणाधीशो, जगाद श्रेणिकं प्रति ॥२॥
शृणु श्रेणिक ! भूपेन्द्र !, कथां ते कथयाम्यहम् । चारुदत्तस्य येनाऽऽप्तं, वेश्याव्यसनजं फलम् ॥३॥
द्वीपे जम्बुद्रुमाऽभिख्ये, क्षेत्रे श्रीभरताऽभिधे । अङ्गदेशेऽतिविख्याते, चम्पेति विदिता पुरी ॥ ४ ॥
तस्यां धर्मक्रियादक्षो, राजा विमलवाहनः । भानुदत्ताऽभिधः श्रेष्ठी, देविला चाऽस्य भामिनी ॥५॥
श्रेष्ठिनी पुत्रहीनाऽथ, यक्षान् पूजति सर्वदा । पूजयन्त्येकदा दृष्टा, मुनिना व्योमवाससा ॥६॥
निषिद्धा श्रेष्ठिनी तेन, किं मिथ्यात्वं करोषि हि । वत्से ! मिथ्यात्वदोषेण, नरके यान्ति देहिनः ॥७॥
श्रेष्ठिनी तं तदा प्राह, स्वामिन् किं नु करोम्यहम् । पुत्राऽऽभावेन दुःखार्ता, मिथ्यात्वं क्रियते मया ॥८॥

मुनिमुख्यो जगादैनां, पुत्रिके ! दुःखं मा कृथाः । पुत्रोऽचिरेण कालेन, अवश्यं ते भविष्यति ॥९॥
कुदेवपूजया वत्से!, सम्यक्त्वं हि विलीयते। सम्यक्त्वे नु गते नुनं, सुखं स्वप्नेऽपि दुर्लभम् ॥१०॥
गुरुर्वाक्येन सन्तुष्टा, नीत्वा सम्यकत्वमुज्ज्वलम्। गेहे गत्वा सुखेनैव, स्थिता निश्चयसंयुता ॥११॥
कियत् काले ततो जाते, पुत्रं साऽसूत सुन्दरम्। वृद्धिं याति समं मित्रैः, प्रधानादि सुनन्दनैः ॥१२॥
हरिः शिखो गोमुखाऽख्यो, वराहोऽथ परं तथा । मरुभूतादिभिः सार्द्धं, मित्रैः पञ्चभिरन्वितः ॥१३॥
चारुदत्तोऽथ ववृधे, मित्रैः सार्द्धं परं पठन्। तस्यैव पुरबाह्यस्थे, मन्दरो नामको गिरिः ॥१४॥
गिरौ तत्र शिवं प्राप्तो, मधरो मुनिनायकः । यात्राऽस्य प्रतिवर्षे हि, मार्गशीर्षे सुनिश्चितम् ॥१५॥
तत्र राजादिभिः सार्द्धं, चारुदत्तोऽपि निर्गतः। यात्रार्थं मुनिनाथस्य, समं मित्रैः समुत्सुकः ॥१६॥
तत्र राजादिभिः सर्वैः, निषिद्धः स च बालकः । दूरे गन्तु न ते युक्तं, चारुदत्तोऽत्र स्थापितः ॥१७॥
चारुदत्तोऽपि मित्रैश्च, स्थित्वा बाह्यवने तदा । नदीतटस्थमुद्यानं, विनोदात् क्रीडितुं गतः ॥१८॥
भ्रमता तत्र वने तेन, क्वणितं शुश्राव दुःखजम्। दृष्ट्वा कदम्बशाखायां, नरैकः कीलितस्तदा ॥१९॥
व्यलोकयत तदा तस्य, दृष्टिं खेटकसंस्थिताम्। खेटकं शोधयामास, तस्य दृष्ट्या प्रभावतः ॥२०॥

खेटमध्ये स्थितं दृष्टं, गुटिकानां त्रयं तदा। नीत्वा गुटित्रयं तत्र, यत्राऽसौ कीलितो नरः ॥२१॥
कीलोत्पाटनिका चैका, वर्त्तते गुटिकोत्तमा। वर्जितः कीलकैश्चाऽभूत्, गुटिकायाः प्रभावतः ॥२२॥
सञ्जीविन्याः प्रभावेन, जातो मूर्च्छाविवर्जितः। व्रणसंरोहिणीयोगान्निर्व्रणोऽसौ तदाऽभवत् ॥ २३ ॥
निरामयः शरीरोऽसौ, नीत्वा खड्गं च खेटकं। जगाम व्योममार्गेण, खेचरो वेगवाँस्तदा ॥२४॥
गत्वा मुहूर्तमात्रेण, बन्धयित्वा नरं परं। एकया हि स्त्रिया युक्तस्तत्रैव पुनरागतः ॥ २५ ॥
आगत्य चारुदत्तस्य, पतित्वा पादयोस्तदा। जगाद विनयं कृत्वा, शृणु स्वामिन्! वचो मम ॥२६॥
विजयार्द्धगिरौ रम्ये, विद्याधरनिषेविते। तत्रैव दक्षिणश्रेण्यां, नगरं शिवमन्दिरम् ॥ २७ ॥
महेन्द्रविक्रमस्तत्र, भूपो जायाऽस्य मत्तिका। सुतो मितगतिर्नामा विद्यावानस्म्यहं विभो! ॥२८ ॥
धूम्रसिंहारिमुण्डाभ्यां, मित्राभ्यां सहितोऽन्यदा। कौतुकाद्भ्रममाणोऽहं, हैमन्ते पर्वते गतः ॥ २९ ॥
तत्र हिरण्यरोमख्यः, क्षत्रियः तापसोत्तमः। तस्याऽस्ति तनया नाम्नी, सरूपा सुकुमारिका ॥३०॥
तस्याः मोहस्य पाशेन, विद्धोऽहं हृदये यदा। तदा विवाहिता साऽपि, याचयित्वा हि तापसम् ॥३१॥
धूम्रसिंहोऽपि हृदये, तदासक्तो बभूव च। हरणार्थं मनश्चक्रे, मद्भयात् त्रस्तचेतसा ॥३२॥

तया सह गतोऽद्याऽत्र क्रीडितुं स्वेच्छया युतः। प्रमत्तावस्थया स्थोऽहं, कीलितो तेन पापिना ॥३३॥
इदानीं हि त्वया नाथ!, मोचितोऽहं कृपावता। स दुष्टोऽयं समानीतो, भार्येयं तु मम प्रभो! ॥३४॥
अद्यप्रभृति जीवामि, तवैव कृपया विभो!। तवाऽस्मि किङ्करो नाथ!, वद किं करवाण्यहम् ॥३५॥
चारुदत्तो जगादैनं, त्वं मे भ्राता न संशयः। मुञ्चयित्वा खगं तत्र, तयोः प्रीतिः पराक्षता॥ ३६ ॥
खेचरोऽपि गतो गेहं, नत्वाऽस्य चरणं मुदा। दृष्ट्वा वन्धादिसम्बन्धं, वहन् चित्ते हि तद्गुणान् ॥३७॥
अथाऽसौ चारुदत्तोऽपि, मित्रैः सह गृहं गतः। प्रत्यहं पठने शक्तो, व्यसनं तस्य तदैव हि ॥ ३८ ॥
श्रेष्ठिसिद्धार्थनामाऽस्ति, सुमित्रा तस्य भामिनी। मातुलश्चारुदत्तस्य, तस्य मित्रवती सुता ॥३९॥
पितृभ्यां याचयित्वा तां, चारुदत्तो विवाहितः। निर्घाटयाति कालं सः, शास्त्रचिन्तारतोऽनिशम् ॥४०॥
आगतयैकदा दृष्टा, प्रातः पुत्री सुमित्रया। युक्ता ताम्बूलभूषाद्यैः चन्दनादिविलेपनैः ॥ ४१॥
पुत्रि! रुष्टोऽस्ति ते नाथ! कुत्रचित् कारणदपि। शरीरे हि तवाऽकल्पो, दृश्यते सन्ध्यया कृतः ॥४२॥
पुत्री जगाद हे मातः! न रुष्टोऽस्ति पतिर्मम। शास्त्रस्य व्यसने लग्नो, न मे वार्तां करोत्यसौ ॥४३॥
श्रुत्वा पुत्रीवचस्तावद्, दुष्टचित्ता च साऽभवत्। देविलायाः समीपं हि, गत्वा प्रोवाच रोषतः ॥४४॥

देविले ! शृणु पुत्रस्ते, पठितो मूर्ख एव हि। स्त्रियो वार्ता न जानाति, यतः संसारिके स्थितः ॥४५॥
यद्यसौ पठनासक्तो, विवाहोऽस्य कथं कृतः। विद्याया व्यसनं त्याज्यं, रामासक्तेन निश्चितम् ॥४६॥
देविलयाऽथ सन्तोष्य, सुमित्रा प्रेषिता गृहं। देवरं रुद्रदत्ताख्यं, तयाऽऽकार्य निवेदितम् ॥ ४७ ॥
चारुदत्तो विलासादि–भोगवार्ता न विन्दति। रुद्रदत्त! तथाकार्यं, यथाऽयं भोगलालसः ॥ ४८ ॥
भ्रातृपत्न्यास्तु तां वार्तां, श्रुत्वाऽऽगाद् रुद्रदत्तकः। वेश्या वसन्तमालाऽस्ति, वसन्ततिलकाङ्गजा ॥४९॥
रूपलावण्यसंयुक्ता, कलागुणविचक्षणा। सङ्केतं ग्राहिता सा, लोभ्यो मे भ्रातृदेहजः ॥५०॥
चारुदत्ताऽभिधानो हि, कलागुणविशारदः। कामवार्तां न जानाति, मोहनीयस्त्वया ध्रुवम् ॥५१॥
इति शिक्षापनां दत्वा, गतोऽसौ निजवेश्मनि। चारुदत्तं समाहूय, पुरे तौ हि विनिर्गतौ ॥५२॥
ततो गतौ तु वेश्यायाः, मन्दिरं तौ च वेगतः। गत्वा द्युतं समारब्धं, रुद्रदत्तेन वेश्यया॥ ५३॥
रुद्रदत्तोऽपि द्युतेऽत्र, वारं वारं जितस्तया। हारन्तं चारुदत्तेन, दृष्ट्वा पितृव्यमञ्जसा ॥५४॥
द्युतं तेन समारब्धं, वसन्तमालया सह। वसन्तमालयाऽवादि, कुमारं विनयात्तदा ॥ ५५ ॥
अहं तु जरती त्वं हि, कुमारो यौवनाऽन्वितः। रन्तुं न युज्यते तस्मात्, ममाऽप्यत्र त्वया सह॥५६॥

वसन्ततिलका नाम्ना, ममाऽस्ति देहजा वरा । तया त्वया हि कर्तव्या, द्युतक्रीडा मनोहरा ॥५७॥
चारुदत्तोऽपि तत्रैव, वेश्यापुत्र्या सहाऽरमत् । रममाणः कुमारोऽसौ, जलं याचितवाँस्तदा ॥५८॥
याचिते चाऽथ पानीये, मोहचूर्णेन मिश्रितम् । पायितः परमं तोयं, ततः कामेन पीडितः ॥५९॥
पितृव्यः प्रेषयामास, चारुदत्तं तया सह । गत्वा हर्म्योपरिष्टाच्च, रन्तुं लग्नो विचक्षणः ॥ ६०॥
स्थितः षड्वर्षमर्यादं, तत्राऽसौ मोहविक्लवः । एभिः वर्षैस्तदा भुङ्क्तं, द्रव्यं षोडशकोटिकं ॥६१॥
पित्रा तत्र जनैः प्रेक्षां, कारितो नागतो यदा । कथापितं तदा तस्य, तातो रोगेन पीडितः ॥६२॥
तत्सुद्ध्यर्थं गृहं वत्स !, शीघ्रमागम्यतां त्वया । चारुदत्तस्तदाऽवोचत्, वैद्यानाकार्य कोविदान् ॥६३॥
यथेप्सितं धनं दत्वा, कराप्योऽसौ निरामयः । तदा पित्रा पुनस्तस्य, मृतोऽपि च कथापितम् ॥६४॥
चारुदत्तेन तत्रोक्तं, श्रीखण्डाऽगुरुचन्दनैः । मिलित्वा स्वजनौघेन, संस्कार्योऽसौ पिता मम ॥ ६५॥
तदा दुर्व्यसनासक्तं, ज्ञात्वा पुत्रं निजं हृदि । श्रेष्ठि जग्राह चारित्रं, सर्वदुःखविनाशनम् ॥६६॥
षड्वर्षैरपरैरेव, कोटी षोडश भक्षिता । द्वात्रिंशच्च यदा कोटी, भक्षितास्तेन तत्र वै ॥ ६७ ॥
गेहं च ग्रहणे मुक्त्वा, मात्रा तदपि प्रेषितम् । हिरण्यस्य सहस्रं च, परं द्वादशसम्मितम् ॥ ६८ ॥

याच्यमाने तथाऽप्यस्मिन्, मात्रा किं तत्र निर्मितम्। प्रेषितानि करण्डेन, स्नुषायाः भूषणानि च ॥६९॥
वसन्तमालया तानि, भूषणानि विलोक्य वै । गतद्रव्यं हि तं ज्ञात्वा, पुत्र्यै सर्वं निवेदितम् ॥७०॥
गतद्रव्यमिमं त्यक्त्वा, कुरु त्वं सधने रतिम् । निर्द्धनो सर्वथा त्याज्यो कामदेवः समो यदि ॥७१॥
वेश्याशास्त्रं न जानासि, द्रव्यहीनं नरं भुवि । त्यजन्ति गणिका नूनं, सर्वलोकेषु विश्रुतम् ॥७२॥
पुत्री मातुःवचः श्रुत्वा, जगाद मातरं प्रति। इह जन्मन्ययमेव, मम भर्तेति निश्चितम् ॥७३॥
मातुश्चित्तं परिज्ञाय, पुत्री तं निजस्वामिनं। एकाकिनं कदाचिच्च, न तत्याज हितावहा ॥ ७४॥
विमृश्यैवं हि कुट्टिन्या, रात्रौ निद्राप्रवर्द्धनं। भोजनं शायितौ तौ हि, दत्वा ताभ्यां तदा परम् ॥७५
भूषणैः रहितं कृत्वा, चारुदत्तं निवस्त्रकम्। कम्बलैर्बन्धयित्वैनं, खाले हि विण्मयेऽक्षिपत् ॥७६॥
भक्षणाय पुरीषस्य, गतैका गृहशूकरी । तया तत्र मुखे तस्य, स्पर्शने चुम्बने कृते ॥ ७७ ॥
जगाद चारुदत्तोऽपि, वसन्ततिलके! शृणु । निद्रां मे हि समायाति, अतोऽपसर वेगतः ॥७८॥
तत्रस्थस्य वचः श्रुत्वा, तलवरैर्वहिःकृतः। कस्त्वमत्र स्थितो रात्रौ, उक्तस्तैरुत्थितस्तदा ॥ ७९॥
चारुदत्तः स्वयं ज्ञात्वा, त्यक्तं खाले तया तदा। वृत्तान्तं तलवरेभ्योऽपि, सर्वं तेन निवेदितम् ॥८०॥

निजाऽऽवासं गतो यावत्, ततस्तैः द्वारपालकैः। निर्घाटितो जगादैवं, किमिदं मे गृहं न हि ॥८१॥
तत्रैव हि गृहं नूनं, दत्तं ग्रहणकेऽन्यया। क वा वसति मे माता, भार्यायुक्ताऽत्र निर्द्धना ॥८२॥
कुटीरकं हि तैस्तस्य, दर्शितं तत्र सोऽगमत्। मिलितो मातृभार्याभ्यां, दुःखिते ते बभुवतुः ॥८३॥
मात्राऽऽलिङ्ग्य रुदित्वाऽथ, स्नापितो शुचिलेपतः। सुखदुःखकथां कृत्वा, जगाद मातरं प्रति॥८४॥
विदेशेऽहं गमिष्यामि, दर्शयामि कथं मुखम्। द्रव्यस्योपार्जनं कृत्वा, गमिष्यामीति निश्चितम्॥८५॥
भार्ययाऽऽकारितस्तत्र, मातुलोऽसौ समागतः। चारुदत्तं जगादेति, शृणु वत्स ! वचो मम ॥८६॥
द्रव्यषोडश कोटी च, वर्तते मद्गृहे ध्रुवम्। गृहित्वा व्यवसायं हि, कुरु त्वं संशयं विना ॥८७॥
चारुदत्तस्तदाऽभाणि, न मे स्थातुं च युज्यते। गत्वा देशान्तरे नूनं, व्यवसायं करोम्यहम् ॥८८॥
भार्यां तस्यः समर्प्याऽऽशु, नत्वा तां मातरं निजां। साहङ्कारस्तु चित्तोऽसौ, चारुदत्तो विनिर्गतः॥८९॥
सिद्धार्थो मोहतस्तस्य, पृष्ठतोऽपि विनिर्गतः। बलकादेशमध्ये तु, नद्या स्तीरं गतौ हि तौ ॥९०॥
ततोऽपि मूलिकां नीत्वा, धृत्वा स्वयमेव मस्तके। पलाशनगरे गत्वा, वृषभध्वजश्रेष्ठिनः ॥९१॥
गृहस्य कोणके स्थित्वा, विक्रीय प्रत्यहं च तौ। तत्रोत्पन्नेन द्रव्येण, नीतः कर्पास एव हि ॥९२॥

दग्धः सर्वोऽपि कर्पासः, ततस्तौ द्रव्यवर्जितौ । रत्नान्युपार्जयामास, गिरौ मलयनामके ॥९३॥
उपार्ज्य गमने काले, भिल्लैर्नीतानि तानि च । ततः प्रियङ्गुनामाख्यं, पत्तने तौ गतौ तदा ॥ ९४॥
चारुदत्तस्य तातस्य, भ्रातुर्मित्रं तु वर्तते । तेन सूरेन्द्रदत्तेन, नीतौ द्वीपान्तरे हि तौ ॥९५॥
द्वादशाब्दानि तत्रैव, स्थित्वा द्रव्यमुपार्ज्य च । तौ हि मध्ये समुद्रस्य, बहुद्रव्येण गतौ यदा ॥९६॥
तदा हि खण्डतां प्राप्तं, जलयानं सद्रव्यकं । फलकेन समुद्रात्तौ, निर्गतौ हि पृथक् पृथक् ॥९७॥
अजानन् चारुदत्तस्य, शुद्धिं सिद्धार्थमातुलः । ततोऽपि स्वपुरं यातो, चारुदत्तं विलोकयन् ॥ ९८ ॥
उदम्बरावतीग्रामे, चारुदत्तो गतो यदा । तदा शुद्धिं परिप्राप्तः, सिद्धार्थस्य गतस्य हि ॥ ९९ ॥
सिन्धुदेशेऽथ गत्वा स, सम्बरिग्राममाश्रितः । तत्राष्टादशकोटी हि, द्रव्यस्य वर्ततेऽपि तु ॥१००॥
तद् द्रव्यं सकलं नीत्वा, जीर्णोद्धारादि भेदतः । दानपुण्यविशेषेण, कालं गमति सो यदा ॥१०१॥
दानकीर्तिं समाकर्ण्य, वीरप्रभयशाह्वयः । आगतो नरवेषेण, परीक्षार्थं जिनालये ॥ १०२ ॥
जिनं द्रष्टुं समायातश्चारुदत्तः सपर्यया । क्वणन्तं तं समाकर्ण्य, प्रपच्छैनं दयापरः ॥ १०३ ॥
कस्मात् क्वणसि हे वत्स!, पीडितोसि कथं परं । देवो जगौ च हे शूर ! शृणु ते कथयाम्यहम् ॥१०४॥

शूलस्य हि कथा चोग्रा, वर्तते महती मम। मनुष्यपार्श्वखण्डस्य, सेकेनोपशाम्यति ॥ १०५ ॥
तस्य दुःप्रासिता नूनं, स्थितो व्याधिर्न गच्छति । श्रुत्वा त्वां दानवन्तं हि, तवपार्श्वे समागतः ॥१०६॥
चारुदत्तस्ततस्तस्य, श्रुत्वा वाक्यं जगाद तं । ग्रहाणेदं हि पार्श्वस्य, खण्डं तेऽहं ददाम्यहम्॥१०७॥
इत्युक्त्वा छुरिकया लात्वा, पार्श्वखण्डं ददौ तदा । तदा साश्चर्यचित्तेन, यक्षेणाऽपि स पूजितः॥१०८॥
निर्व्रणं तं क्षणात्कृत्वा, शंसयित्वा सुरो गतः। तत्सर्वं हि धनं दत्तं, चारुदत्तेन तत्र हि ॥ १०९॥
दत्वा धनं ततो यातः, पुरे राजगृहे वरे । तत्रैकं दण्डिनं प्राप्य, दुःखं तस्मै निवेदितम् ॥११०॥
तेनाऽभाणि मया सार्द्धं, एह्येहि कियदन्तरे । रसस्य कूपिका तत्र, वर्तते धनदानृणी ॥ १११ ॥
चारुदत्तो बभाणैनं, द्रुतमागम्यते मया । त्रिदण्डी चारुदत्तेन, गतोऽसौ रसकूपिकाम् ॥ ११२ ॥
मञ्चिकाऽऽरोहिणं कृत्वा, रज्ज्वा बद्ध्वा हि स तदा । जगाद चारुदत्तं स, पात्रं दत्वा करेऽस्य च॥ ११३
अत्र मध्ये धराकुपे, रसो सैव हि वर्तते। पात्रं तेन रसेनाशु, पूरयित्वा प्रमुच्यताम् ॥ ११४ ॥
रज्ज्वा चालनतो बाह्ये, पात्रं निष्कास्य वेगतः । मुञ्चामि मञ्चिका पश्चाद्, त्वदानयनहेतवे ॥११५॥
त्वयोपविश्य तस्यां हि, शीघ्रमागम्यतां त्वया । कर्तव्यं सर्वं नाथस्य, तवोक्तं नियतं मया ॥ ११६ ॥

मञ्चिकाया निविष्टोऽसौ, इत्युक्त्वा चारुदत्तकः। तुम्बं तस्य करे दत्वोत्तारितस्तेन वेगतः ॥ ११७॥
उत्तीर्य सोऽपि मेदिन्यां, यावत्पात्रं तु पूरितम्। तावत्तत्र रसस्तेन, नरेण केन जल्पितः ॥११८॥
किं क्षिप्तोऽसि च तेनैव, निष्कृष्टेन तपस्विना। यथापूर्वमहं क्षिप्तो, रसलोभेन लोभितः ॥११९॥
चारुदत्तस्तदा प्राह, कस्त्वं वा केन हेतुना। क्षिप्तोऽसि रसमध्ये हि, तत्सर्वं मे निवेदय ॥१२०॥
जगाद रसमध्यस्थः, शृणु मित्र! निगद्यते। उज्जयिन्यां वणिक्पुत्रो, निर्द्धनोऽहं यदाऽभवम् ॥१२१॥
तदास्यैवाऽत्र मिलितः, क्षिप्तस्तेन तपस्विना। रसतुम्बं मया पूर्वं, मञ्चिकायां निवेशितम् ॥१२२॥
दोरिका चालिता यावत्, तावत् तेनोद्धृता हि सा। मञ्चिका चात्र निक्षिप्तो-पविष्टोऽहं तदा द्रुतम् ॥१२३
अर्द्धमार्गे हि नीत्वाऽहं, छित्त्वा रज्जुं स वेगतः। क्षिप्तोऽहं रसपूजार्थं, तस्मादत्रागतोऽस्म्यहम् ॥१२४॥
चारुदत्तोऽथ तेनाऽपि, पृष्टः प्राह यथातथम्। प्रपच्छ तं रसे संस्थं, किं कर्त्तव्यं मयाऽधुना ॥१२५॥
स जगाद च हे वत्स!, रसं पूर्वं समर्पय। पश्चात्त्वं मञ्चिकायां हि, मुक्त्वा पषाणसंहतिम् ॥१२६॥
दोरिकां चालयेत वेगात्, ततः सोऽपि हि दुष्टधीः। अर्द्धमार्गे हि तां नीत्वा, च्छेदयिष्यति दोरिकाम् १२७
इत्युक्ते चारुदत्तेन, तत्सर्वं हि कृतं तदा। द्वितीये वारे दुष्टात्मा, छित्त्वा रज्जुं द्रुतो गतः ॥१२८॥

चारुदत्तो गते तस्मिन्, प्रपच्छ वणिजं वरं । अस्ति निस्सरणोपायं, मम कोऽपि निवेदय ॥१२९॥
अत्रैका च समायाति, गोधा पातुमिमं रसं । मध्याह्ने दृश्यते नूनम्, प्रोवाचैवं वणिग्वरः ॥१३०॥
तस्याः पुच्छं हि धृत्वा त्वं, चाद्य निस्सर पुण्यतः । अतः परं तु ते भाग्यं, नान्योपायोऽत्र विद्यते ॥१३१॥
उपायं तु निवेद्याऽऽशु, पुनः प्रोवाच सोऽपि तम् । अधुना क्षणमेकेन, प्राणा यास्यन्ति मे ध्रुवम् ॥१३२॥
चारुदत्तो ददौ तस्मै, नमस्कारान् पञ्च हि । तस्य मन्त्रप्रभावेन, गतः स्वर्गे क्षणेन सः ॥ १३३ ॥
चारुदत्तोऽपि मध्याह्ने, गोधापुच्छं दधार च । तावद् कष्टेन सा याति, धृते पुच्छे हि गोधिका ॥१३४॥
तावदुद्गारिते मार्गे, हस्तमात्रप्रमाणके । गोधाया विवरे तत्र, समायातो विचेतसा ॥१३५॥
तावत्तत्र समायाता, चरन्तोऽजा अनेकशः । उपरिस्थे तु विवरे, अजायाश्चरणोऽपतत् ॥१३६॥
चारुदत्तस्तदा तस्य, पुच्छं मुक्त्वा दधार तं । धृते पादे हि राटीत्सा, पशुपालाः समागता ॥१३७॥
बिले तं चरणं ज्ञात्वा, खनितुं ते समुद्यताः । चारुदत्तो जगादेवं, खन्यतां हि शनैः शनैः ॥१३८॥
साश्चर्यैः पशुपालैश्च, खनित्वाऽसौ बहिष्कृतः । बहिः निस्सृत्य वेगेन, वने गन्तुं समुद्यतः ॥१३९॥
महिषैको लग्नः पृष्ठे, तावत्सोऽपि पलायितः । यावद् याति गुहामध्ये, अजगरो द्वारमाश्रितः ॥१४०॥

मस्तके चरणं दत्वा, गूहामध्ये विवेश सः। तेन चरणघातेन, प्रबुद्धोऽजगरोऽप्यसौ ॥१४१॥
विलोक्यते गूहाद्वारं, महिषैको विलोकितः। वेगादजगरेणाऽपि, महिषोऽसौ मुखे धृतः ॥१४२॥
कुर्वतोः हि तयोर्युद्धे, छलेनाऽसौ विनिर्गतः। ततोऽपि मिलितौ चाऽग्रे, महिषौ द्वौ यमोपमौ ॥१४३॥
भयात्तस्य समारूढश्चारुदत्तस्तरुवरं, । ततोऽवतीर्य वृक्षात्स, नदीतीरे गतो यदा ॥ १४४ ॥
तदा पश्यति तत्रस्थान्, रुद्रदत्तपुरस्सरान्। विलोकनार्थं तस्यैव, पश्यन्तस्तेऽपि मेदिनीम् ॥१४५॥
ततोऽस्य मिलिता वेगात्, सर्वे हरिशिखादयः। मिलित्वा भोजनं चक्रुः, प्रीतियुक्ता परस्परम् ॥१४६॥
मिलिता प्रियदत्तस्य, ततस्ते श्रीपुरं गताः। भानुदत्तस्य मित्रं हि, प्रियदत्तोऽपि वर्तते ॥१४७॥
प्रीणिताः प्रियदत्तेन, मानिता मज्जनादिना। पाथेयं प्रचुरं दत्तं, तेषां हि गच्छतां सताम् ॥१४८॥
काचस्य वलयान् नीत्वा, तेन द्रव्येण ते तदा। गत्वा गान्धारविषये, विक्रीता वलयाश्च ते ॥१४९॥
तेषां लीलां ततो दृष्ट्वा, केनचिद्भणितं तदा। के भवन्तः कथं दुःखात्, भ्रम्यन्ते वसुधाऽखिला ॥१५०॥
ततोऽस्मै रुद्रदत्तेन, निजं दुःखं निवेदितम्। रुद्रदत्ताय तैनेवोपदेशोऽयं निवेदितः ॥ १५१ ॥
अतोऽपि च कियद्गत्वा, जापथोऽत्रैव वर्तते। छागानारुह्य तेनैव, गम्यते पर्वतोपरि ॥१५२॥

तत्रैव तानजान् हत्वा, क्रियते भस्त्रिका वरा। तासां मध्ये वसित्वाऽथ, सीव्यन्ते दोरिकैश्च ताः॥१५३॥
भारण्डपक्षिणो तत्राऽऽगत्य मांसस्य लोभतः। नीत्वा ते तां गमिष्यन्ति, रत्नद्वीपं च वेगतः॥१५४॥
भक्षणाऽवसरे तेषां, विपाट्यन्ते हि भस्त्रिका। मनुष्यरूपतो भीता, त्रस्ता यास्यन्ति दूरतः॥१५५॥
तदा रत्नानि ग्राह्याणि, मनसा वाञ्छितानि च। रुद्रदत्तोपदेशं तं, श्रुत्वा जग्राह तानजान् ॥१५६॥
चारुदत्तं बभाषेदमजामार्गेण गम्यते। पर्वतोपरि चैत्यानि, तानि वन्द्यानि निश्चयात् ॥ १५७ ॥
गच्छन्तस्तेऽपि सम्प्राप्ता, तं मार्गमजगामिनम्। चारुदत्तस्तदावादीत्, भवद्भिः स्थीयतामिति ॥१५८
चतुरङ्गुलमार्गोऽयं, वर्त्तते कियदन्तरे। विलोक्याऽत्र समेष्यामि, गच्छाम्येकोऽतिवेगतः॥ १५९ ॥
ते सर्वेऽपि तमित्याहुर्वयं गच्छाम एव हि। जीव्यमाने किमस्माभिः, सर्वैरेव प्रयोजनम् ॥१६०॥
त्वयैकेनाऽपि सर्वं हि, कार्यं चेत्स भविष्यति। किं जीवितैस्तु बहुभिः, कार्यहीनैः निरर्थकैः॥१६१॥
चारुदत्तो जगादैवं, नैव युक्तं ममैव हि। एकस्यार्थे हि बहूनां, नाशो नैव च युज्यते ॥ १६२ ॥
इत्युक्त्वा चारुदत्तोऽपि, छागारूढो जगाम तम्। मार्गं चतुरङ्गुलं वेगात्, ध्यायन् चित्ते जिनेश्वरम्॥१६३॥
गत्वाऽसौ यावदायाति, स्थानं दृष्ट्वा सविस्तरम्। रुद्रदत्तादयः सर्वे, विमृश्य चलिता यदा॥१६४॥

तदा लोकैः स च प्रोक्तः, पीलितास्तेन ते यथा। तथाऽयं भूपतिर्दुष्टः, पीलयिष्यति त्वामपि१४१
तदा क्रोधवशात्प्राह, वालयिष्यामि तानहम्। इत्युक्त्वाऽसौ नृपस्याऽग्रे, गत्वा प्रोवाच तं प्रति १४२
रे रे दुष्ट! दुराचारी, शृणु पाप, वचो मम। मदीया मुनयो हत्वा, जीव्यते च कथं त्वया ॥१४३
इति क्रोधवशात्तस्य, स्कन्धादग्निर्विपुलकः। निर्गतस्तेन दग्धोऽसौ, देशो दण्डकभूभुजः॥१४४
नराश्च विहगास्तेन, पशवो नगराणि च। भूपेन च समं सर्वं, दग्धं च मुनिना सह ॥१४५॥
भूपो मृत्वा गतः श्वभ्रे, सप्तमे घोरवेदने। प्रत्येकं सर्वश्वभ्रेषु, पापतो भ्रमितः नृपः ॥१४६॥
छेदनभेदनजं दुःखं, भुङ्क्त्वा श्वभ्रेऽतिरौरवे। क्रमादयं वने जातो, जटायुर्विहगो ह्ययम् ॥१४७॥
तदादि देशो सर्वोऽपि, दण्डकाख्यं वनं भुवि। सञ्जातो मुनिशापेन, पापात् किमपि नाऽपरम्१४८
भुङ्क्ते वै कर्मजं प्राणी, फलं चाऽत्र शुभाऽशुभम्। न प्रधानो नरो लोके, कर्मतो वसुधातले १४९
श्रुत्वाऽथ तं मुनेर्वाक्यं, विहगो मूर्च्छयाऽन्वितः। श्रुत्वा पुरातनं जन्म, पपात क्षितिमण्डले१५०
सीतया कृपयोत्थाय, सिक्तोऽसौ शीतलैर्जलैः। गतमूर्च्छो समागत्य, मुनिपादाववन्दत ॥१५१॥
वन्दयित्वा मुनेः पादौ, अश्रुणि पातयन् तदा। जगौ स पशुभाषाभिः, स्वामिन् मे वचनं शृणु१५२

तथा कुरु कृपां नाथ !, यथा संसारसागरात् । उत्तीर्यते महादुःखात्, निर्विण्णोऽहं कृपापरः॥१५३
जिनधर्मस्तदा दत्तो, सम्यक्त्वेन विभूषितः । अणुव्रतानि पञ्चैव, गृहितानि च पक्षिणा ॥१५४॥
धर्मध्याने रतो जातो, जीवहिंसा पराङ्मुखः । सीता तं पालयामास, जैनधर्मेण भाविता १५५
इत्युक्त्वा व्रतिनां नाथो, जगाम स्वेच्छयान्वितः । धर्मयोग्यं तदा स्थानं, श्रीरामप्रमुखैर्नतः १५६
तत्र स्थाने स्थितौ तौ हि, ससीतौ रामलक्ष्मणौ । जटायुपक्षिणा युक्तौ,वीरौ सर्वभयोज्झितौ १५७
लक्ष्मणोऽपि ततो यातो, विलोकितुं वने तदा । व्याघ्रसिंहादिचौराणां, व्यालानां दुष्टकर्मणाम्१५८
पश्यमानो वने याति, धीरो वीरो यथा हरिः । तथा वायुवशादस्य, गन्धः कोऽपि समागतः १५९
तेन गन्धवशेनाऽसौ, जगाम तां दिशं प्रति । किञ्चित् स्थित्वा पुनर्गच्छन्, गृह्णन् गन्धं मुहुर्मुहुः १६०
तदाप्रवंशजं जालं, दृष्टं लक्ष्मीधरेण च । तस्योपरि स्थितं खड्गं, लिप्तं चन्दनकर्दमैः १६१
मन्दारकल्पवृक्षादिपुष्पवृन्दैश्च पूजितम् । चन्द्रहासाऽभिधानं हि, शक्रहस्तारसमागतम् १६२
ततोऽत्र गणिनां नाथः, पृष्टोऽसौ श्रेणिकेन च । केन वा साधितो नाथ!, कथमत्र समागतः १६३
गौतमोऽपि जगादेवं, शृणु श्रेणिक ! कथ्यते । अलंकारपुरे राजा, खरदूषणनामकः ॥ १६४ ॥

तस्य सुर्प्पणखा जाया, स्वसा या रावणस्य च। तस्य पुत्रोऽपि शम्बूकः, सर्वविद्यासमन्वितः१६५
तेनाऽयं साधितो मन्त्रो, दुःसाध्यः क्षुद्रशक्तिनाम्। वर्षद्वादशमर्यादं, एकान्तरोपवासकम् ।१६६
एकान्तरे जलेनैव, कोद्रवान्नेन पारणम्। सूर्प्पनखा समागत्य, कारयत्येव नाऽपरः ॥१६७॥
दीयमाने च मन्त्रेऽस्मिन्, गुरुणा प्रतिपादितम्। खड्गे समागते नूनं, ग्राह्यं न दिनसप्तकम् ॥१६८
अष्टमेऽह्नि जिनेन्द्रस्य, कृत्वा पूजादिकं त्वया। वन्दित्वा हि ततो ग्राह्यं, खड्गं तं चन्द्रहासकम्१६९
इति तस्य गुरोः पार्श्वात्, नीत्वा शम्बूकनामकः। मन्त्रं च साधयामास, स्वावधौ खड्गमागतम्१७०
समागते ततः खड्गे, सप्तैवं दिवसान् स्थितः। तावत्तत्र समायातो, लक्ष्मणः पुण्यवाँस्तदा।१७१
दृष्ट्वा खड्गं स्थितं तत्र, लक्ष्मणो लीलयाऽऽददौ। नीत्वा करे तदालोक्याऽवाहयत् वेणुजालके।१७२
तस्य मध्यस्थितः सोऽपि, शम्बूको ध्याननिश्चलः। लक्ष्मीधरेण न ज्ञातो, वेणुजालमच्छेदयत्।१७३
द्वादशयोजनं यावत्, प्रसृतोऽसि तदा क्षणात्। छित्वा वनं तु वेगेन, लक्ष्मणस्य करे पुनः१७४
समागतं समालोक्य, खड्गं लक्ष्मीधरस्तदा। भव्यं खड्गं समायातं, कस्यचिच्च वने स्थितम्१७५
ततोऽपि चलितः सोऽपि, स्थितो गत्वा च लक्ष्मणः। तावत्तत्र समायाता, नखसूर्प्पेति संज्ञिता।१७६

आकाशाच्च वनं प्रेक्ष्य, चिन्तितं तु तया हृदि । कृतं हि मत्पुत्रेण, नूनमेतत्परीक्षणम् ॥१७७॥
विरूपकं तु पुत्रेण, कृतं जीवविनाशकम् । इति प्रमोदमापन्नाऽवतीर्णा तत्र सा वने ॥१७८॥
पुत्रं विलोकयामास, रहितं शिरसा तदा । माया विचिन्तयामास, पुत्रेणैव कृता हृदि ॥१७९॥
समागत्य जगादैनं, पुत्रमोहेन प्रेरिता । उत्तिष्ठोत्तिष्ठ पुत्र! त्वं, माया कर्तुं न युज्यते ॥१८०॥
चिरात्साधितविद्योऽसि, तत्र माया न युज्यते । माङ्गल्याऽवसरे वत्स !, कथं माङ्गल्यहानिता १८१
मातुश्चित्तपरीक्षार्थं, मायेयं क्रियते कथम् । इति नानाविधैर्वाक्यैर्नोत्थितोऽसौ सुतो यदा॥१८२॥
तदा नीत्वा नीजाङ्के तं, मस्तकं कुण्डलान्वितम् । विलापं परमं चक्रे, हृदयाऽऽस्फालनादिकं १८३
हा ! वत्स! त्वं कथं यातो, मुक्त्वा मां मातरं निजाम् । चिरसाधितविद्यस्त्वं, केन पापेन वा हतः१८४
प्रसृतौ हि करौ कस्य, पापिनो बालके त्वयि । वधमानस्य दुष्टस्य, नीचोऽसौ मानवाऽधमः१८५
हा ! सुन्दर ! महाबाहो !, हा ! सुनेत्र ! सुवक्त्रक ! कथं हतोऽसि दैवेन, वयहीनोऽसि बालकः१८६
कथं त्वया वियुक्ताऽहं, जीवामि दुःखपूरिता । पूर्वजन्मनि हा ! वत्स !, कस्य दत्ता वियोगता१८७
इति नानाविधैर्वाक्यैर्विलापं बहुधा तथा । कृत्वाऽथ चिन्तितं चित्ते, पश्चादपि हि रोदनम् १८८

विलोकयामि तं पापं, येन मे बालको हतः। प्रेषयामि दुराचारं, मृत्यवे यममन्दिरे ॥ १८९ ॥
विमृश्यैवं तु मुक्त्वा तं, मस्तकं क्षितिमण्डले। वने विलोकयामास, पुत्रशत्रुं हि सर्वतः॥१९०॥
तावत्तत्र स्थितो दृष्टो, लक्ष्मणो रूपवांस्तदा। खड्गहस्तो महाकायो, दृष्ट्वा रूपेण मोहिता॥१९१
कामबाणेन विद्धा सा, चिन्तामेनामकारयत्। अनेनाऽपि सुरूपेण, विरोधः क्रियते कथम्॥१९२
यदि स्यात् पुरुषोऽयं मे, रूपवान् यौवनान्वितः। अनेन भुज्यते भोगं, तदा मे जीवितं प्रभा१९३
विमृश्यैवं निजं रूपं, परावर्त्य सयौवना। कन्यावेषं ततो कृत्वा, जाता षोडशवार्षिकी ॥१९४॥
लक्ष्मणाऽग्रे समागत्य, विलपन्ती स्थिता हि सा। लक्ष्मणोऽपि च तां दृष्ट्वा जगादेवं विचक्षणः १९५
कस्माद्रोदिषि हे बाले !, स्थिताऽरण्ये जनोज्झिते। काऽसि त्वं कस्य हेतोर्वा, स्थिताऽसि विजने वने
कन्यावेषण सा प्राह, लक्ष्मणं विनयाऽन्विता। गताऽहं मातुले गेहे, वर्द्धिता तेन मोहतः ॥१९७
यदाऽत्राऽऽनयनार्थं हि, समायातो पिता मम। तदाऽहं चलिता पित्रा, यानारुढा गृहं प्रति १९८
विस्मृताऽत्र स्थिता रात्रौ,गच्छता निद्रयाकुला। न जानामि च तं मार्गं,येन तातो गतो मम ॥१९९॥
स्थिताऽत्र विजनेऽरण्ये, दृष्ट्वा ते रूपमुत्कटम्। मोहपाशेन बद्धाहं, वाञ्छामि त्वां नरोत्तमम्२००

वृणीष्व त्वं कृपां कृत्वा, मोहिता तव दर्शनात्। तदा लक्ष्मीधरः प्राह, शृणु बाले ! वचो मम२०१
मम रामाऽभिधानोऽस्ति, भ्राता ज्येष्ठो गुणान्वितः। रूपलावण्ययोगेन, जिताः सर्वसुराऽसुराः ।२०२
गन्तव्यं हि त्वया तत्र, स ते स्वामी भविष्यति । सा जगाद च हे नाथ !, तव तुल्यो भविष्यति
तदा तां लक्ष्मणः प्राह, शृणु तस्य ममाऽन्तरम् । मेरुसर्षपयोर्यद्वत्, तद्वत् रूपेण तेजसा ।२०४
तस्य वाक्येन सा तत्र, गता रामस्य सन्निधौ। तदाऽस्य दर्शनमात्रेण,कामस्य विशिखैर्हता ॥२०५
रामं प्राह तदा साऽपि, शृणु नाथ! वचो मम। प्रेषिता तव पार्श्वेऽहं, लक्ष्मणेनाऽनुजेन ते ॥२०६
वृणीष्व त्वं कृपां कृत्वा, मां बालां सुकुमारिकाम्। तव मोहात्समायाता, प्रेषिता लक्ष्मणेन च २०७
दृष्ट्वा रामोऽपि तां बालां, जगादैवंविधं वचः। किमुक्तं लक्ष्मणस्याऽग्रे, तेन वा प्रेषिता कथम्
तदा जगाद सा बाला, शृणु नाथ! निगद्यते। लक्ष्मीधरस्य रूपेण, मोहिताऽहं यदा विभो! ।२०९
तदाऽस्य सन्निधिं गत्वा, मया प्रोक्तं वचो वरम्। अङ्गीकारं कुरुष्वाऽऽशु, तव रूपेण मोहितां २१०
तदा तेन ममैवोक्तं, बाले! रामस्य सन्निधिं। गत्वा वृणीष्व तं नाथं, ममाऽत्राऽवसरो न हि ॥२११
तस्य वाक्यवशान्नूनं, तवान्तेऽहं समागता। अतस्त्वं मे कृपां कृत्वा, ध्रुवं वरितुमर्हसि ॥२१२॥

रामचन्द्रोऽथ तां प्राह, वरितुं मे न युज्यते। लक्ष्मणो वाञ्छितः पूर्वमनुजो मनसा त्वया ।२१३
अतस्त्वं भ्रातृपत्नी मे, सत्यं वत्से! वधूटिका। गम्यतां वेगतस्तत्र, स त्वां नूनं वरिष्यति ।२१४
गता सा तस्य वाक्येन, पुनर्लक्ष्मणसन्निधिम्। रामस्य वचनं तस्मै, कथयामास मोहतः।२१५
लक्ष्मणोऽपि पुनः प्रोचे, शृणु बाले! वचो मम। रामं तु चेतसा धृत्वा, कथं याताऽस्य सन्निधिम्
वाञ्छितो मनसा रामः, तस्य त्वं भामिनी ध्रुवम्। ज्येष्ठपत्नी समा मातुः, गोपालैरपि भण्यते २१७
अतस्त्वं तत्र गच्छाऽऽशु, स त्वां रामो वरिष्यति। तेन वाक्येन सा तत्र, पुनर्याताऽतिमोहतः२१८
तत्राऽपि रामचन्द्रेण, तथैवोक्तं यथा पुरा। पुनस्तत्र समायाता, यत्राऽसौ लक्ष्मणो बली २१९
कामबाणैश्च विद्धाऽसौ, सप्तवारांस्तथा गता। कामबाणैर्हता नूनं, को न याति च मूढताम् ।२२०।
सीतया सप्तमे वारे, प्रोक्तं सूर्पणखां प्रति। रे रे मूढे! बकानां हि, नीडं चेतयसे कथम् २२१
सीतावाक्यं तयाऽऽकर्ण्य, क्रोधपूरितया हृदि। डासयित्वा हि तर्जन्या, प्रोक्तं दुष्टं वचस्तदा २२२
शृणु मूढे! बकानां हि,नीडांश्च चवलामि ते। इत्युक्त्वा स्वतनुं नीत्वा,याताऽऽकाशे क्षणेन सा २२३
विदार्य करजैर्देहं, विकीर्य कचकान्निजान्। रेणुना देहमालिप्य, विलपन्ती गता गृहे ॥२२४॥

गत्वा सा दूषणस्याऽग्रे, मूर्च्छया पतिता क्षितौ । मूर्च्छामस्याः निराकृत्य, दूषणोऽपि जगाद ताम्
कथं दुःखं प्रपन्नाऽसि, केनेदं निर्मितं प्रिये ! । कस्याऽष्टमोऽथवा चन्द्रो, येनेदं हि कृतं तव २२६
सूर्पणखाऽपि तं प्रोचे, दुःखगद्गदभाषिणी । कुर्वती देवनां गाढं, हृदयाऽऽस्फालनादिकाम् २२७
दण्डकाख्ये वने नाथ !, मानुषौ द्वौ समागतौ । ताभ्यां शम्बूकनामाऽसौ, पुत्रस्ते वै निपातितः
हतं पुत्रं समालोक्य, दुःखेन पुरिता सती । अङ्के तु मस्तकं नीत्वा, विलपन्ती यदा स्थिता २२९
एकेन च तयोर्मध्ये, समागत्य विलोकिता । विलपन्ती यदा दृष्टा, तदा दुष्टोऽवलां च माम् २३०
क्षताऽस्मि करजैस्तेन, शठेन निर्घृणात्मना । तव पुण्यप्रभावेन, शीलं स्वं रक्षितं मया ॥२३१॥
देव ! पुन्यवशात्तस्य, भुजाभ्यां निर्गता विभो । पलाय्याऽत्र समायाता, दुःखं ते हि निवेदितम् २३२
विद्यमाने त्वयि स्वामिन् !, कथं तेनाऽस्मि पीडिता । तव पुत्रो हतो येन, रामा तेऽहं विडम्बिता २३३
ताभ्यां मनुष्यमात्राभ्यां, कष्टं तव समर्प्पितम् । किमत्र जीवितव्येन, मम नाथ ! प्रयोजनम् २३४
ताभ्यां तु यदि पश्यामि, भूमौ लुठति मस्तके । पादेनाऽऽहत्य हे ! नाथ !, जीवितं गणयाम्यहम् २३५
भार्याया वचनं श्रुत्वा, दूषणोऽपि जगाद ताम् । गम्यतां मन्दिरे देवि !, भव्यमत्र भविष्यति २३६

क्रोधचित्तोऽतिवेगेन, युद्धार्थं गन्तमुद्यतः । तदाऽमात्यैरसौ प्रोक्तो, गन्तुं नाथ ! न युज्यते ॥२३७
वर्षैर्द्वादशभिर्येन, साधितं खड्गमाहृतम् । न सामान्यो नरो लोके, त्वया स जीयते कथम् २३८
रावणोऽपि च दूतेन, बोधनीयस्त्वया विभो ! समेष्यति स वै शीघ्रो, भागिनेयस्य दुःखतः ॥२३९
अमात्यानां च वाक्येन, दूतस्तेनाऽपि प्रेषितः । रावणबोधनार्थाय, निपुणो मलिशेखरः ॥२४०॥
लक्ष्मणोऽपि गतस्तावत्, समीपं रामभूभुजः । रामोऽपि लक्ष्मणं प्राह, दुष्टा काऽपि हि सा ध्रुवम्२४१
इति वार्तां प्रकुर्वाणौ, ससीतौ रामलक्ष्मणौ । वर्तेते तत्र तौ यावत्, तावदन्यकथान्तरम् ॥२४२
खरदुषणनामाऽसौ, पुत्रदुःखेन दुःखितः । साहङ्कारवशात्सोऽपि, ससैन्यो निर्गतो बहिः ॥२४३॥
सैन्येन महता सार्द्धं, आकाशे चटितो यदा । तदा सोऽपि समायातो, दण्डकं परिवेगतः॥२४४
सीतया सहसा दृष्ट्वा, सैन्यं तं गगनाङ्गणे । नाथ नाथेति सम्भाष्य, रामाङ्के पतिता क्षणात्२४५
रामोऽपि गगनेऽपूर्वं, सैन्यं दृष्ट्वाऽथ शङ्कितः । जगाद लक्ष्मणं वेगात्, दृष्टिं धनुषि पातयन्२४६
सज्यतां सज्यतां वेगात्,भो ! भो ! लक्ष्मण ! लक्ष्मण ! एते हि कुटिला लोकाः, चेष्टितं ज्ञायते न हि
लक्ष्मणोऽपि तदा रामं, जगाद विनयाऽन्वितः। अतोऽहं दूरतो यामि, तावदत्रैव स्थीयताम् २४८

रक्षणीया त्वया नाथ !, सीता भीता हि सर्वथा । यावन्नाऽऽगम्यते युद्धात्तावत्त्त्रैव स्थीयताम् २४९
तेभ्यो राक्षसेभ्योऽपि, हार्यते च यदा मया । सिंहनादं करिष्यामि, तदा गन्तव्यमागमिनि २५०
इत्युक्त्वा धनुरादाय, लक्ष्मणो संमुखं प्रति । चलितो धीरचित्तोऽसौ, दृष्टो विद्याधरैर्भटैः ॥२५१
जगाद लक्ष्मणस्तांश्च, रे रे विद्याधराधमाः । गम्यते कथमन्यत्र, युद्ध्यतां हि मया सह ॥२५२
ततो विद्याधरास्तेऽमी, लक्ष्मणेन समं मृधं । खरदूषणयुक्ताश्च, शस्त्रजालैः समाकुलम् ॥२५३॥
एकधा शतधा सोऽपि, सहस्रलक्षधा तथा । युद्धं चक्रे स सौमित्रिः, गणन् किञ्चिन्नहि खगान् २५४
एकेन पातितास्तेनाऽनेकेविद्याधरास्तदा । समस्तमाकुलं चक्रे, सोऽपि तं दुषणं बलम् ॥२५५॥
युगपत्पतिता तैस्तु, समस्ता शरसंहतिः । अन्तराले शरैस्तेन, लक्ष्मणेन निवार्यते ॥२५६॥
कुर्वन्तं समरं दृष्ट्वा, धीरं शूरं नरोत्तमम् । वीराधीतखगाधीशश्चिन्तयमास चेतसि ॥२५७॥
दूषणेन च तातो मे, हतो दुष्टेन वैरिणा । असमर्थतया तस्य, सेवाऽत्र क्रियते मया ॥२५८॥
एनं बलाधिकं प्राप्य, वैरं तं वालयाम्यहम् । विमृश्यैवं बलेनाऽथ, गतो लक्ष्मणसन्निधिम् २५९
लक्ष्मणं स ततो नत्वा, जगादेवं विराधितः । तवाऽस्मि सेवको नाथ !, तव पार्श्वे समागतः २६०

मम तातो हतोऽनेन, दुषणेन दुरात्मना । अतस्तद्दुःखनाशाय, तवान्तेऽहं समागतः ॥२६१॥
श्रुत्वैवं लक्ष्मणो प्रोचे, शृणु विद्याधरनायकः । यदि त्वं कुटिलश्रिते, रक्षितस्त्वं तथाऽपि हि२६२
विराधितोऽपि तं प्राह, श्रृणु नाथ ! वचो मम । जेतुं न शक्यते नूनं, मयाऽपि खरदूषणः २६३
दूषणेन विना सर्वं, सैन्यं नाथ ! जयाम्यहम् । दूषणेन समं युद्धं, त्वयाऽपि क्रियतां विभो ! २६४
इत्युक्त्वा सकलं सैन्यं, स्वीचक्रेऽसौ खगाधिपः । तथाऽप्यङ्गीचकाराऽत्र, लक्ष्मणः खरदूषणः२६५
जाते महति सङ्ग्रामे, खगो जिग्यखिलं बलम् । तत्रैव लक्ष्मणेनाऽपि, हतोऽसौ खरदूषणः ॥२६६॥
तावद् दुतवचः श्रुत्वा, निर्गतो रावणो द्रुतम् । आरुह्य पुष्पकाभिख्यं, विमानं वेगतस्तदा २६७
आगच्छता विमानेन, रावणेन च खे तदा । दण्डकाऽरण्यमध्यस्था, दृष्टा तेनाऽपि जानकी
जानकीरूपमालोक्य, मोहितो राक्षसाऽधिपः । सीतायाः हरणे तेन, विद्या स्वा प्रेपिता क्षणात्
गत्वा विद्याऽपि तत्रस्थं, रामचन्द्रं व्यलोकयत् । रामस्य तेजसा साऽपि, हर्तुं शक्ता यदा न सा ।
तदा व्यावृत्य तस्यैव, कथयामास विद्यया । रामस्य तेजसा नाथ !, हर्त्तुं सा शक्यते न हि।२७१
विद्याया वचनं श्रुत्वा, जगादेवं दसाननः । उपायं तं समाख्याहि, यथाऽतो याति सो वली ।

'गम पापमृ-षये. ॥७१॥

विषयाऽपि तदाप्रोक्तं, सिंहनादं च लक्ष्मणः। करोति यदि युद्धस्थो, रामो याति तदा ध्रुवम्।
वियां दशाननः प्राह, सिंहनादं तथा कुरु। अन्तराले द्रुतं स्थित्वा, यथाऽयं याति वेगतः ॥२७४॥
विषया तस्य वाक्येन, सिंहनादस्तथाकृतः। सीतया सहितेनाऽत्र, रामेणाऽपि यथा श्रुतः २७५॥
श्रुत्वा नादं तदा सीता, रामं प्राह विचक्षणा। लक्ष्मणेन कृतो नाथ! सिंहनादो भयावहः॥२७६
वेगतो गम्यतां तत्र, यत्राऽसौ वर्ततेऽनुजः। जितो वै राक्षसैर्नूनं, सिंहनादं करोत्यतः ॥२७७॥
गिरेश्चतुष्कवाहेऽसौ, स्थापयित्वा हि जानकीम्। छादयित्वा महाभीत्या, शुष्कपत्रैस्तथोपरि॥
जटायुपक्षिणं मुक्त्वा, रक्षणाय रघूत्तमः। वेगतोऽपि ययौ तत्र, यत्राऽसौ लक्ष्मणो बली ॥२७९
तावत्तेनाऽपि दुष्टेन, ह्रैकाकीं च जानकीम्। आगत्य वेगतो नीता, मांसपेशीं यथा खगः ॥
रुदन्ती मैथिली यावत्, रावणेन हृता किल। जटायुना खमुत्पत्य, हतोऽसौ नखरै खरैः॥२८१॥
रावणेनाऽपि रुष्टेन, चपेटया हतः खगः। ततः कण्ठगतः प्राणः, पपात वसुधातले ॥२८२॥
विलपन्ती यदा सीता, नीता दुष्टेन खे तदा। खगो रत्नजटीनामा, लग्नः पृष्ठश्च वेगतः ॥२८३॥
प्रोक्तोऽसौ रावणस्तेन, रे रे क्रव्यादकाधम!। हृत्वा परस्त्रियं मूढ! कथं यासीति क्षेमतः २८४

परस्त्रीव्यसने रावण कथा,

लग्नोऽसौ पृष्ठतस्तस्य, जानक्याः परिदेवनं । श्रृण्वन् दयापरस्तेन, युद्धं कर्तुं प्रचक्रमे ॥२८५॥
स्थित्वा सोऽपि ततो विन्ध्य, रावणः क्रोधपूरितः । सागरे पातयामास, लुनपक्षे यथा खगः २८६
पुण्यात् सागरमध्येऽपि, स्थलं प्राप्तः खगात्मजः । वंशे बद्ध्वा निजं वस्त्रं, स्थितो मार्गं व्यलोकयत्
विलपन्ती जगौ सीता, रे! रे! पाप ! नराधमः। पररमां सतीं नीत्वा, क्षेमं वाञ्छसि किं मुधा? २८८
श्लोकोऽयं किं त्वया मूढ !, न श्रुतो जनभाषितः । 'एकतः सर्वपापानि, पररामा तथैकतः' २८९॥
विलापं कुर्वतीं सीतां, रावणोऽपि जगाद ताम् । किं वृथा देवनं देवि !, करोषि कुजनाद्दतम्॥२९०
अहं विद्याधराधीशो, जातस्ते पतिः निश्चितम् । मानुषेण च किं साध्यं, तेन वै क्षुद्रशक्तिना॥२९१
अष्टादशसहस्राणि, पत्नीनां वर्तते मम । तासां मध्ये त्वमाद्याऽसि, कथं मूढेऽतिरोदिषि ॥ २९२
अन्तरे तु नृपे कृत्वा, जगावेवं च मैथिली । रे ! रे ! मूढ ! दुराचार ! वचः पापं किमर्जसि॥२९३
काकोऽपि गगने याति, सिंहो भूमौ च तिष्ठति । दृष्टं श्रुतं कदा केन, सादृश्यं काकसिंहयोः॥२९४
विलापं कुर्वतीं बालां, नीत्वाऽसौ राक्षसाऽधमः। लङ्कायां स्वगृहोद्याने, मुमोचैनां भयार्दिताम्२९५
प्रत्यहं निजरामाभिः, स मोहयितुमुद्यतः । सा सती रामचित्तस्था, मोहितुं केन शक्यते ॥२९६॥

नमस्कार फलानु-
भवे.
॥ ७२ ॥

रामशुद्धेथ मर्यादं, चक्रे साऽनशनं सती । अतः परं प्रवक्ष्यामि, रामस्याऽपि हि चेष्टितम्॥२९७
रामो गत्वाऽथ वेगेन, यावत पश्यति लक्ष्मणम् । तावत्तेन जिताः सर्वे, राक्षसा खेचरास्तथा२९८
तावल्लक्ष्मीधरः प्राह, दृष्ट्वा रामं समागतम् । मुक्त्वा चैकाकिनीं सीतां, कथं तात ! समागतः २९९
रामो जगाद हे वत्स !, सिंहनादवशाच्च ते । समायातो त्वयाऽऽहूतः, प्रेषितः सीतया ध्रुवम् ३००
लक्ष्मणोऽपि जगौ नैव, सिंहनादो मया कृतः । कृतः केनाऽपि दुष्टेन, सीताहरणहेतवे ॥३०१
गम्यतां गम्यतां नाथ !, सीता नीता ध्रुवं विभो! । मयाऽप्येते खगा नूनं, जिताश्च दूषणेन हि ३०२
तेन वाक्येन रामोऽपि, चलितो वेगवत्तरः । निजं स्थानं समागत्य, यदा पश्यति तां न हि॥३०३
सर्वत्राऽऽलोकिता तेन, यदा दृष्टा न जानकी । तदा कण्ठगतः प्राणः, दृष्टोऽसौ विहगः क्षितौ३०४
तस्मै पञ्चनमस्कारान्, ददौ रामो दयापरः । मृत्वा पक्षी गतः स्वर्गे, नमस्कारफलेन च ॥३०५
विलापं विविधं चक्रे, रामो विरहपीडितः । मूर्च्छया विवशो भूत्वा, पपात वसुधातले ॥३०६
वनवातवशाज्जातो, मूर्च्छया परिवर्जितः । प्रपच्छ मोहमूढोऽसौ, भूरुहान् पर्वतांस्तदा ॥३०७॥
भोः! भोः! महीधराधीशाः, धातुभिः परिपूरिताः। रामः पृच्छति मोहेन, नूनं दशरथात्मजः ३०८

परस्त्रीध्य-
र्ने रावण
कथा.

सीता दृष्टा सती मुक्ता, भवतां पार्श्वतो मया। दृष्टेति प्रतिशब्दोऽभूत्, क्वाऽसौ पृष्टे पुनस्तथा३०९
इति दुःखवशाद्रामो, पतित्वा वसुधातले। स्थिते सति समायातः, सविराधितलक्ष्मणः ॥३१०
सीतया रहितं रामं, ददृशे लक्ष्मणो यदा। तथा दुःखाऽऽकुलो भूत्वा, हृता सीतेति चिन्तयन् ३११
रामपार्श्वे समागत्य, प्रणनाम यदा स च। तदा रामोऽपि तं प्राह, कोऽसि त्वं विजने वने ॥३१२
तदा जगाद सौमित्रिः, दासस्तेऽहं च लक्ष्मणः। लक्ष्मणोऽसि ध्रुवं वत्स!, सीता केनाऽपि मे हृता३१३
तावन्योन्यं समालिङ्ग्य, रोदनं परिचक्रतुः। तदा विराधितेनाऽपि, रक्षितौ रोदने रतौ ॥३१४॥
चिन्तया व्याकुलो जातो, विराधितः खगात्मजः। तस्यैव मीलितस्तावत्, सुग्रीवो वानराऽधिपः३१५
सुग्रीवोऽपि निजं दुखं, खगजाय निवेदितम्। तेन तस्यैव रामस्य, कथितं दुःखकारणम् ॥३१६॥
सुग्रीवोऽपि च तं प्राह, शृणु विद्याधरात्मजः। दुःखं च निजजायायाः, नाशयिष्यति ते प्रभुः ३१७
आनयामि तदा नूनं, सीताशुद्धिं च वेगतः। नाऽऽनयामि च सीतायाः, शुद्धिं चेत्सप्तमे दिने३१८
विशामि ज्वलने नूनं, मम वाक्यं सुनिश्चितम्। जीवमाना मृता चाऽपि, कर्तव्या शुद्धि निश्चिता३१९
वृत्तान्तं तं समाकर्ण्य, विराधितखगस्तदा। वेगतोऽपि समागत्य, रामचन्द्रं न्यवेदयत् ॥३२०॥

शृणु राम ! महाभाग !, मित्रं कार्यकरं च मे। अस्ति विद्याधराधीशः, सुग्रीवो वानराधिपः ३२१
सहस्राक्षौहिणीनाथो, नारीदुःखेन दुःखितः। अत्रैव हि समायातो, तत्र पुण्यप्रभावतः ॥३२२॥
प्रतिज्ञां स करोत्येनां, भद्रे दुःखे ममैव हि। आनयामि तु सीतायाः, शुद्धिं वै सप्तमे दिने ।३२३।
रामोऽपि तेन वाक्येन, हर्षयुक्तो जगाद तम्। हे विराधित ! वेगेनाऽमेलयस्त्वं कपीश्वरम् ३२४॥
विराधितोऽपि वाक्येन, रामस्यैव गतस्तदा। सुग्रीवं च समादाय, रामपार्श्वे समागतः ॥३२५॥
सुग्रीवेऽथ समायाते, रामोऽसौ च समुत्थितः। पादयोस्तस्य वेगेन, ननाम प्लवगेश्वरः॥३२६॥
गाढमालिङ्ग्य रामेण, पृष्टे क्षेमादिकं स च। लक्ष्मणस्य ततः पादौ, पतितो विनयाऽन्वितः।३२७।
रामेणाऽपि ततः पृष्टं, नारीदुःखस्य कारणम्। तेनाऽपि कथितं सर्वं, रामस्याऽग्रे विचेष्टितम्।३२८।
शृणु नाथ ! त्वं मे दुःखं, सावधानतया विभो !। सुग्रीवोऽहं भुवि ख्यातो, किष्किन्धाधिपतिर्बली
तारा मे भामिनी नाथ !, रूपलावण्यसंयुता। तस्याः रूपस्य मोहेन, कोऽपि खेटः समागतः।३३०।
मम रूपं समादाय, गेहमध्ये समागतः। तया गतिविशेषेण, ज्ञातं नाऽयं पतिर्मम ॥ ३३१ ॥
गेहमध्ये प्रवेशोऽस्य, न दत्तस्तारया तदा। समस्तां गेहजां वार्तां गुप्तां चाऽकथयत् स च ३३२

परस्त्रीध्य-ने रावण कथा.

तदा जगाद सा तारा, रे! रे! मूढ ! दुराशयः। सर्वं रूपादिकं तस्य, गतिर्नो स्वामिनो मम ३३२
तावत्तत्र समायातो, वनमध्ये गतोऽप्यहम् । आगच्छन्तं च मां दृष्ट्वा मद्गति शिक्षयन्स च ।३३४।
गेहमध्ये प्रविष्टा सा, दृष्ट्वा नरयुगं तदा । कपाटयुगलं दत्त्वा, तदोद्विग्ना च सा सती ॥३३५॥
मया दृष्टाऽथ स प्रोक्तो, रेरे विद्याधराधमः। कस्त्वं कस्मात्समायतो, मद्गृहे मायया युतः॥३३६॥
सोऽपि च तत्र मां प्राह, मद्गेहे त्वं समागतः मया सह कृतं तेन, युद्धं दुष्टेन वेगतः ॥३३७॥
तदा च मन्त्रिभिः प्रोक्तं, विमृश्य तारया सह । एकेनाऽपि द्वयोर्मध्ये, प्रवेष्टव्यं गृहे नहि ।३३८।
सन्देहो युवयोर्मध्ये, द्वयोः सदृशरूपयोः। अस्माकं वर्त्तते चित्ते, तावद्द्वारे तु तिष्ठतु ॥३३९॥
मन्त्रिभिः जायया सार्द्धं, वाह्ये द्वावपि स्थापितौ। एकेनैकेन पुत्रेण, सैन्यसार्द्धं विभागतः३४०॥
[ बहु निरीक्ष्यमाणैस्तैः, संशयाकुलमानसैः । नैकोऽपि निर्णीतो तत्र, कुवैद्यो रोगिणं यथा ]
जायावियोगमूढात्मा, गतोऽहं रावणाऽन्तिके । रावणोऽपि न शक्तोऽभूत सन्देहस्याऽपि भञ्जने
अन्यैर्विद्याधरैः सर्वैः, मिलितैर्हनुमतादिभिः। भग्नोऽसौ न च सन्देहो, मम दुःखकरं परम्॥३४२॥
समागतोऽधुना नाथ!, तव पार्श्वेऽस्ति दुःखितः । मम पुण्यप्रभावेन, दृष्टोऽसि त्वं नरोत्तम !।३४३

रामचन्द्रोऽपि तं प्राह, शृणु त्वं प्लवगेश्वर !। सत्यो वाऽथवाऽसत्यो, यादृशस्तादृशोऽस्तु वा ३४४
स्थापितोऽसि मया नूनम्, किष्किन्धायाः पदे स्वयम्। तारां समर्पयामीति दुःखं भञ्जामि ते ध्रुवम्
पश्चान्निजकुलाचारो, कर्तव्यो वै मयि त्वया । सुग्रीवोऽपि च रामोक्तं, श्रुत्वा हर्षमुपागतः ॥
किष्किन्धायां च ते नीता, रामचन्द्रादयस्तदा । सुग्रीवेण पुरी बाह्ये, स्थित्वाऽऽहूतो दलेन सः॥
समायातोऽतिदुष्टात्मा, सोऽपि सुग्रीववेषभाक्। परस्परं च मिलितौ, ज्ञातं रामेण नो तदा ।३४८।
मायामयेन तेनाऽपि, गदया ताडितो हृदि । पतितो मूर्च्छया भूमौ, गत प्राण इव क्षणात् ।३४९।
ततोऽपि चेतनां प्राप्य, रामपार्श्वे समागतः ।भव्यं कृतं नराधीश! खण्डितो न त्वया विभो!॥३५०॥
जगाद हे वत्स!, न ज्ञातोऽसि मया ध्रुवम्। अधुना तेन युद्धं त्वं, कुरुष्व मम पार्श्वतः।
...ः पुनस्तेन, समायातोऽतिवेगतः । रामस्तमपि वेगेन, गदया वै निपातितः ॥ ३५२ ॥
...ते गता विद्या, सर्वा मायामयी तदा । गतविद्योऽथ सहसा लोकैर्ज्ञातः खगः स च३५३
...ः पूजितः सर्वैः, लोकैः पुत्रादिभिस्तदा । यातो महोत्सवेनाऽसौ, गृहं जायाविभूषितम्।
...पे मिलिता तस्य, कृशा सा विरहेन च । वियोगः स्वामिनो भग्नो, रामचन्द्रप्रसादतः३५५

[illegible] ॥ ५५ ॥

परस्त्रीव्यसने रावण कथा.

गतं दुःखं वियोगोत्थं, पूरितौ प्रमदेन तौ। गताः सुखाश्चहि ज्ञाताः, ताभ्यां ते दिवसाश्च षट्।
वाटीकायाश्च मध्येऽस्थात्, रामदेवः सलक्ष्मणः। परकार्यरतो नूनं, सरलो विरलो जनः॥३५७॥
लक्ष्मणोऽपि ययौ वेगात्सुग्रीवस्य गृहं तदा। गेहाऽऽगतं च तं दृष्ट्वा, सुग्रीवो भयपूरितः ॥३५८॥
अग्रतोऽसौ स्त्रियं कृत्वा, सार्द्धहस्तां गुणाऽन्वितः। आसने तं समारोप्य, ननाम विनयेन सः॥३५९॥
करयोः सम्पुटीकृत्य, निविष्टोऽसौ यदा पुनः। तदा तं लक्ष्मणः प्राह, कृतं युक्तं त्वया न तु ३६०
मम भ्राताऽतिदुखेन, वनमध्ये च तिष्ठति। त्वं तु रामां समासाद्य, स्थितो हे निजे सुखात् ३६१
स्त्रीणां विरहतो दुःखं, सत्यं जानासि त्वं ध्रुवम्। इदृशेन च दुःखेन, पूरितो रघुनन्दनः ॥ ३६२
इति ज्ञात्वा त्वया चित्ते, कथं न प्लवगेश्वर!। परदुःखस्य दुःखेन, पीडयन्ते विरला जनाः३६३
क्व गता ते च मर्यादा, प्राप्तो वै सप्तमो दिनः। रामारसप्रसक्तानां, क्व मर्यादा वचः क्व च॥३६४
सुग्रीवस्तं तदा प्राह, शृणु नाथ! वचो मम। सप्तमो दिवसो नाथ!, वर्ततेऽद्य ममैव हि ॥३६५
नाऽऽनयामि च तां वार्तां, सम्पूर्णे सप्तमे दिने। विशामि च तदा नूनं, ज्वलन्तं ज्वलनं ध्रुवम् ३६६
इत्युक्त्वा लक्ष्मणो नाभा, रामपार्श्वे समागतः। पपात पादयोस्तस्य, विनयाऽनतविग्रहः॥३६७

आकार्य च निजान् सर्वान्, कुलजांश्च खगोत्तमान्। सुग्रीवो विनयात् प्राह, भो! भो! शृणु खगोत्तमा
ममाऽस्ति जीवितव्येन, भवतां चेत्प्रयोजनं। तदाऽऽनयन्तु वेगेन, वार्तां सीतामयीं ध्रुवम् ।३६९।
विद्याधरास्ततः सर्वे, निर्गता वेगवत्तराः। दिशो विलोकयन्तस्ते, बभ्रमुर्वसुधातले ॥ ३७० ॥
तेषु विद्याधरश्चैको, विमानेन युतो ययौ। सागरोपरि तत्रैव, यत्राऽसौ वर्तते खगः ॥३७१॥
तं लम्बितध्वजं दृष्ट्वा, स्थितं सागरविटकं। विमानात् वेगतः सोऽप्युत्ततार गगनाङ्गणात् ॥३७२
यदा दृष्टः स्थितस्तेन, वुद्धाऽसौ जल्पितस्तदा। भो भो रत्नजटी मित्र! पतितोऽसि कथं जले ॥
रत्नजटी च तं प्राह, शृणु मित्र! कथां मम। रावणेन सरोषेण, सद्विद्या नाशिता ध्रुवम् ॥३७४
तदा जगाद खेटोऽसौ, कथं ते रावणेन च। विरोधो दुःसहो जातो, कथयस्व खगोत्तमः ॥३७५॥
तदा रत्नजटी प्रोचे, सीता रामस्य भामिनी। चोरिता राक्षसेन्द्रेण, दृष्टा सा रुदती मया ।३७६।
ततोऽहं करुणाऽऽविष्टो, लग्नो पृष्ठे ततो द्रुतम्। मया दत्ता तदा तस्य, गालयो वै तस्करस्य च
तदा क्रुद्धेन तेनाऽपि, विद्या मे नाशिता हठात्। तदादि च स्थितोऽहं वै,समुद्रस्य स्थले ध्रुवम् ३७८
विद्याधरः पुनः प्राह, सत्यं जानासि निश्चितम्। रावणेन हृता सीता, नाऽत्र कार्या विचारणा३७९

ततो रत्नजटी प्रोचे, विद्या मे नाशिता हठात् । सीताया हरणे नूनं, नास्ति सन्देहता ध्रुवम् ३८०
इति तस्य वचः श्रुत्वा, सोऽपि विद्याधरस्तदा । स्थापयित्वा विमाने तं, नीतः किष्किन्धिकां पुरीम्
तेन रत्नजटी नीत्वा, सुग्रीवस्य प्रदर्शितः । कथितं तस्य वृत्तान्तं, विद्यानाशनपूर्वकम् ॥ ३८२॥
सुग्रीवोऽपि च तं नीत्वा,हर्षेण पूरितो हृदि । रामस्य सन्निधौ गत्वा,स्मिताऽऽस्यो राघवं जगौ८३
शृणु नाथ ! महाभाग !, वार्ता सीतामयीं ननु । अयं रत्नजटी वेत्ति, पृच्छ्यते रहसि प्रभो!३८४
रामः सलक्ष्मणो हर्षात्, सुग्रीवेण च तेन च । एकान्तोऽसौ स्थितो वेगाद्विराधितसमन्वितः३८५
तदा रत्नजटी तेन, वृत्तान्तं पृच्छितोऽखिलम् । रावणेन हृता सीता, ज्ञाता तैरिति निश्चितम् ३८६
जगादेवं च तान् सर्वान्, रामोऽपि क्रोधपूरितः । क्व प्रयाति स दुष्टात्मा, हृत्वा मे भामिनी वनात्
सज्यतां सज्यतां वेगात्, गम्यते वेगतो मया ।रावणस्य पुरे गत्वा, हत्वा तं दशकन्धरम् ।।३८८॥
आनयामि च तां सीतां, मद्वियोगकृशानना । तदा विद्याधरा सर्वे, स्मित्वाऽत्र वचनं जगुः३८९
रावणो नहि सामान्यो, वर्तते न च क्षुल्लकः । येन केनाऽपि जेयो न, सहसा गम्यते कथम् ३९०
प्रेषयित्वा नरं कश्चिद् विलोक्य जानकीं ननु । कथं तिष्ठति सा बाला, किं करोति स रावणः ३९१

आकार्य च निजान् सर्वान्, कुलजांश्च खगोत्तमान्। सुग्रीवो विनयात् प्राह, भो! भो! शृणु खगोत्तमा
ममाऽस्ति जीवितव्येन, भवतां चेत्प्रयोजनं। तदाऽऽनयन्तु वेगेन, वार्तां सीतामयीं ध्रुवम् ।३६९।
विद्याधरास्ततः सर्वे, निर्गता वेगवत्तराः । दिशो विलोकयन्तस्ते, बभ्रमुर्वसुधातले ॥ ३७० ॥
तेषु विद्याधरश्चैको, विमानेन युतो ययौ। सागरोपरि तत्रैव, यत्राऽसौ वर्तते खगः ॥३७१॥
तं लम्बितध्वजं दृष्ट्वा, स्थितं सागरविटकं । विमानात् वेगतः सोऽप्युत्ततार गगनाङ्गणात् ॥३७२
यदा दृष्टः स्थितस्तेन, बुद्धाऽसौ जल्पितस्तदा । भो भो रत्नजटी मित्र! पतितोऽसि कथं जले ॥
रत्नजटी च तं प्राह, शृणु मित्र ! कथां मम । रावणेन सरोषेण, सद्विद्या नाशिता ध्रुवम् ॥३७४
तदा जगाद खेटोऽसौ, कथं ते रावणेन च। विरोधो दुःसहो जातो, कथयस्व खगोत्तमः ॥३७५॥
तदा रत्नजटी प्रोचे, सीता रामस्य भामिनी । चोरिता राक्षसेन्द्रेण, दृष्टा सा रुदती मया ।३७६।
ततोऽहं करुणाऽऽविष्टो, लग्नो पृष्ठे ततो द्रुतम्। मया दत्ता तदा तस्य, गालयो वै तस्करस्य च
तदा क्रुद्धेन तेनाऽपि, विद्या मे नाशिता हठात्। तदादि च स्थितोऽहं वै,समुद्रस्य स्थले ध्रुवम् ३७८
विद्याधरः पुनः प्राह, सत्यं जानासि निश्चितम् । रावणेन हृता सीता, नाऽत्र कार्या विचारणा३७९

ततो रत्नजटी प्रोचे, विद्या मे नाशिता हठात् । सीताया हरणे नूनं, नास्ति सन्देहता ध्रुवम् ३८०
इति तस्य वचः श्रुत्वा, सोऽपि विद्याधरस्तदा । स्थापयित्वा विमाने तं, नीतः किष्किन्धिकां पुरीम्
तेन रत्नजटी नीत्वा, सुग्रीवस्य प्रदर्शितः । कथितं तस्य वृत्तान्तं, विद्यानाशनपूर्वकम् ॥ ३८२॥
सुग्रीवोऽपि च तं नीत्वा,हर्षेण पूरितो हृदि । रामस्य सन्निधौ गत्वा,स्मिताऽऽस्यो राघवं जगौ३८३
शृणु नाथ ! महाभाग !, वार्तां सीतामयीं ननु । अयं रत्नजटी वेत्ति, पृच्छयते रहसि प्रभो!३८४
रामः सलक्ष्मणो हर्षात्, सुग्रीवेण च तेन च । एकान्तोऽसौ स्थितो वेगाद्विराधितसमन्वितः३८५
तदा रत्नजटी तेन, वृत्तान्तं पृच्छितोऽखिलम् । रावणेन हृता सीता, ज्ञाता तैरिति निश्चितम् ३८६
जगादैवं च तान् सर्वान् , रामोऽपि क्रोधपूरितः । क्व प्रयाति स दुष्टात्मा, हृत्वा मे भामिनी वनात्
सज्यतां सज्यतां वेगात्, गम्यते वेगतो मया ।रावणस्य पुरे गत्वा, हत्वा तं दशकन्धरम् ॥३८८॥
आनयामि च तां सीतां, मद्वियोगकृशानना । तदा विद्याधरा सर्वे, स्मित्वाऽत्र वचनं जगुः३८९
रावणो नहि सामान्यो, वर्तते न च क्षुद्रकः । येन केनाऽपि जेयो न, सहसा गम्यते कथम् ३९०
प्रेषयित्वा नरं कश्चिद् विलोक्य जानकीं ननु । कथं तिष्ठति सा बाला, किं करोति स रावणः ३९१

तेनोक्तं वन मध्ये सा, वर्तते शीलभूषिता। तस्य वाक्यवशात्सोऽपि, हनुमांश्च वने गतः ॥४०४॥
अदृश्यत्वेन वृक्षस्य, शाखायामुपरि स्थितः। यावत्पश्यति सीतां सः, तावदन्यत्कथान्तरम्॥४०५॥
रावणेनाऽपि तत्रैव, मन्दोदर्यादयः स्त्रियः। प्रतारणाय सीतायाः, प्रेषिता विंशशेन च ॥४०६॥
ता समागत्य सीतायाः, पुरः स्थित्वा वचो जगुः। शृणु सीते! वचोऽस्माकं, तव सौख्यस्य कारकम्।
रावणो बहुपत्नीको, वर्ततेऽसौ खगाधिपः। तथाऽपि वाञ्छति त्वां हि, पुण्यं स्यात् किमतः परम्॥
अष्टादशसहस्राणि, रामाणां वर्ततेऽस्य च। तासां मध्ये त्वं पुण्येन, भवाऽग्रमहिषी वरा ।४०९।
रामेण मानुषेणाऽत्र, किं साध्यं निन्दितेन ते। त्रैलोक्यकण्टको नाथो, रावणो ते यदा भवेत् ॥
इत्यादिविविधैर्वाक्यैर्जल्पन्त्यस्तां कृशोदरीम्। सीता क्रोधवशात्प्रोचे, हे मन्दोदरि! श्रूयताम्॥
त्वमपि लोकमध्ये हि, सतीत्वं धोपसे ध्रुवम्। भवतां कुशलविचारोऽयं, प्रकटीक्रियते त्वया ॥
तवैवं कुलमार्गोऽयं, सती स्याद् बहुभार्त्रिका। न जानेऽहं त्वया नूनं, कियन्तः पतयः कृता॥४१३॥
नाऽस्माकं हि कुले मूढे! वराऽन्यं वाञ्छति सती॥ इति तस्या वचः श्रुत्वा, क्रुद्धा सा रावणं गता४१४
लुष्ठिमुष्ठिप्रहारं च वाञ्छन्त्यो जानकीं प्रति। हनुमांस्ताडयामास, सर्वा रावणवल्लभाः॥४१५॥

ते सुग्रीवादयस्तत्र, सर्वे वानरकाश्च ते । तं वृत्तान्तं समाकर्ण्य, मन्त्रं कर्तुं समुद्यताः ॥४४१॥
किं कर्तव्यं ! कथं जेयो !, रावणोऽसौ दुराशयः । कथमानीयते सीता !, रामं सन्तोष्यते कथम् !॥४४२॥
रामपक्षे वयं जाता, श्रोष्यते रावणो यदि । का गतिर्ध्रुवमस्माकं, क्रोधे वै राक्षसाऽधिपे ॥४४३॥
15944 रामलक्ष्मणयोः शौर्यमस्माभिर्ज्ञायते न हि। प्रत्ययेन विना नूनं, प्रतीतिर्जायते कथम् ॥४४४॥
यदि कोटिशिलां रामो, लक्ष्मणो वा बलोद्धतः । उत्पाटयति हस्ताभ्यां, तेन वै जीयते स च ॥४४५॥
तदा तु रावणं मुक्त्वा, रामसेवा विधीयते। अन्यथा च द्वये नास्ति, शोभेत्येव न शंसयः ॥४४६॥
तं मन्त्रं च समाकर्ण्य, विराधितखगाधिपः। रामं सलक्ष्मणं प्रोचे, यद्ख्यातं वानरैः खलु ॥४४७॥
लक्ष्मणोऽपि जगादैवं, श्रुत्वा वानरभाषितम्। उत्पाट्यते च सा नूनं, मया कोटिशिला द्रुतम्॥४४८॥
मिलन्तु वानराः सर्वे, शिलापार्श्वे तु गम्यते। दर्शयामि च सर्वेषां, पौरुषं च ममाद्भूतम् ॥४४९॥
सुमुहूर्ते शुभे योगे, मिलिता विद्याधरास्तदा। बालिं पूजोपहारं च, नीत्वा सर्वे बलाऽन्विताः ॥४५०॥
विमाने तं समारोप्य, रामं चैव सलक्ष्मणम् । शिलापार्श्वे च ते याताः, रावणस्य भयाऽऽकुलाः॥४५१॥
पूजयित्वा विधानेन, शिलां योजनविस्तृतां। चतुरस्त्रां सर्वतोभद्रां, लक्ष्मणस्तामढौकयत् ॥४५२॥

स्मृत्वा पञ्चनमस्कारान्, शिलामुत्पाटयत्ततः । जानुदघ्नां च तां दृष्ट्वा, सुरास्तत्र समागताः ॥४५३॥
कुर्वन्तो जयशब्दं ते, मुञ्चन्तो पुष्पसंहतिम् । नन्दन्तो दुन्दुभिं रम्यां, विष्णुपूण्येन प्रेरिताः॥४५४॥
अष्टमोऽयं वासुदेवो, समुत्पन्नोऽस्ति भारते । रावणस्य कुलध्वंसी, लक्ष्मणो वै नरोत्तमः ॥४५५॥
इति देवनिनादं ते, श्रुत्वा खेचरपुङ्गवाः । प्रत्ययं परमं प्राप्ताः, सत्यं वै रावणान्तकः ॥४५६॥
जयजयारवसंयुक्ताः, सर्वे विद्याधरास्तदा । लक्ष्मणेन सहितास्तेऽपि, चक्रुः रामस्य पूजनम् ॥४५७॥
पूजयित्वा परं भक्त्या, रामं चैव सलक्ष्मणम् । विमानेऽथ समारोप्य, किष्किन्धां पुनरागताः ॥४५८॥
सैन्येन महता तत्र, मिलितास्तेऽपि खेचराः । भामण्डलोऽपि दूतेन, सन्देशाद्याऽत्र समाहूतः॥४५९॥
अक्षौहिणीसहस्रेण, सैन्येन सहितो ध्रुवम् । भामण्डलः समायातो, दले रामस्य भक्तितः ॥४६०॥
अन्येऽपि खेचरा ये ये, सुग्रीवहितकारकाः । ते ते तत्र समायाता, येऽपि भामण्डलाऽऽहूताः॥४६१॥
मिलितं साधनं तत्र, वानराणां खचारिणाम् । अत्यन्तं सङ्ख्ययाऽतीतं, रामपुण्यप्रभावतः॥४६२॥
सहस्रद्वयप्रमाणं च, अक्षौहिणीबलं तदा । भामण्डलोऽथ सुग्रीवो, मेलयामासतुर्दलम् ॥ ४६३ ॥
मिलिते सकले सैन्ये, हर्षिताः खेचरास्तदा । प्रमोदं परमं प्राप्तः, रामो लक्ष्मणसंयुतः ॥ ४६४ ॥

रामं तु लक्ष्मणोपेतं, विमाने विनिवेश्य वै । प्रयाणं चक्रिरे वेगाद्, लङ्कां प्रति प्लवङ्गमाः ॥४६५॥
सर्वेऽप्याकाशमार्गेण, लङ्घयित्वा महोदधिम्। वेगतो राक्षसद्वीपे, त्रिकूटाऽचलमागताः ॥४६६॥
दृष्टा लङ्का च तैस्तत्र, तोरणादिविभूषिता। महाशालेन संयुक्ता, राजधानी च राक्षसाम् ॥४६७॥
शकुनाश्च परमा जाताः, लङ्कायाः दर्शने तथा । रामो लक्ष्मणसंयुक्तः, प्रमोदं परमं गतः ॥४६८॥
रावणस्याऽपि सा शुद्धि, सञ्जाता सुखकारिणी। रावणोऽपि महाक्रोधं, प्राप्तो गर्ववशाद्बली ॥४६९॥
एकदाऽसौ दशास्योऽपि, रात्रौ तत्र समागतो । यत्राऽसौ वर्तते सीता, शीलप्राकारमध्यगा ॥४७०॥
राक्षसाः भूतवेतालाः, शाकिन्योऽपि महोरगाः । कण्ठीरवा गजेन्द्राश्च, दर्शिता भीतकारिणंः ॥४७१॥
तेषां भयेन भीताऽपि, शरणं न दशाननम्। गता जनकराजस्य, पुत्री शीलशिरोमणिः ॥४७२॥
प्रभातसमयं यावदुपसर्गैश्च कृतो घनः । प्रभाते रावणो गत्वा, सभाया मण्डपे स्थितः ॥४७३
विलापं परमं चक्रे, सीता दुःखेन दुःखिता। बिभीषणोऽपि तं श्रुत्वा, तत्र यातो दयापरः ॥४७४॥
पृष्टा सा विनयान्नत्वा, मातः! किमिति रोदिषि। तया दयापरस्यैव, वृत्तान्तं कथितं तदा ॥४७५॥
समाश्वास्य च तां सीतां, शीतलैर्वचनैव सः । पुनस्तत्र समायातो, यत्राऽसौ रावणो स्थितः ॥४७६॥

रावणं स तदा प्राह, शृणु भ्रातः! वचो मम। अवश्यं मरणं लोके, सङ्गेन परयोपिताम् ॥ ४७७॥
दीयतां रामदेवस्य, मैथिली सुखहेतवे। कुलकीर्त्योर्यतो वृद्धिर्जायते नियतं विभो ! ॥ ४७८ ॥
त्यज कोपं दुराचारं, कुलकीर्तिविनाशकम् । भज धर्मं महाभाग ! पररामां परित्यज ॥ ४७९ ॥
समायातो ध्रुवं रामो, लङ्कायाः यो वहिः स्थितः। कृत्वा कुलक्षयं तेऽद्य, ग्रहीष्यति निजां प्रियाम् ॥४८०॥
तस्मात्त्वं वैरिशान्त्यर्थं, तावत्सीता समर्प्यताम्। यावद्रामकुले नाम्ना, नाशं ते कुरुते न हि ॥४८१॥
तेन वाक्येन क्रुद्धोऽसौ, जगादेवं विभीषणं। रे रे पाप! दुराचार!, ममाऽग्रे किं प्रजल्पसि ? ॥४८२॥
शत्रोर्गुणांश्च गृह्णासि, मम गृह्णासि दूषणम्। ममाज्ञामध्यतः क्वाऽपि, न स्थातव्यं त्वया शठः ॥४८३॥
इति तस्य वचः श्रुत्वा, जगादेवं विभीषणः । न स्थीयते मया नाथ!, देशे ते निश्चितं मया ॥४८४॥
इत्युक्त्वा स्वबलं नीत्वा, निर्गतोऽसौ विभीषणः। रामस्याऽपि बले गत्वा, सुग्रीवं मिलितस्तदा ॥४८५॥
सुग्रीवस्य च वृत्तान्तं, सर्वं तं हि न्यवेदयत् । तेन वाक्येन सन्तुष्टः, सुग्रीवो वानराऽधिपः॥४८६॥
रामदेवं समागत्य, प्रमोदेन युतोऽवदत् । शृणु राम ! महाभाग ! समायातो विभीषणः ॥४८७॥
रावणेन समं कृत्वा, विरोधं च सुदुस्सहम्। तव पार्श्वे समायातः, पुण्यात् किं किं न लभ्यते ॥४८८॥

रामोऽपि तेन वाक्येन, प्रमोदं परमं गतः। तदा जगाद सुग्रीवं, मेल्यतां मेल्यतां मम ॥४८९॥
सुग्रीवोऽपि समागत्य, मिलितोऽसौ बिभीषणं। रामोऽपि तं समालोक्य, जगादेवं वचो वरम् ॥४९०॥
लङ्केश्वर ! समागच्छ, कुशलं वर्तते तव। लङ्कायास्त्वं पदे सत्यं, स्थापितोऽसि मया ध्रुवम् ॥४९१॥
बिभीषणोऽपि तं प्राह, महान्तो हि चलन्ति न। वाक्यं तु निसृतं वक्त्राद्गजस्यैव रदो यथा ॥४९२॥
रामो जगाद हे वत्स ! भव्यं तेऽत्र भविष्यति। हर्षिता वानराः सर्वे, समायाते बिभीषणे ॥४९३॥
रणभेरीनिनादेन, रावणोऽपि निजं बलं। वेगात्सम्बोधयामास, युद्धार्थं क्रोधपूरितः ॥४९४॥
इन्द्रजिन्मेघनाथाद्या, कुम्भकर्णादयस्तथा। मयदैत्यादयः शूराः प्राप्ता रावणसंनिधिम् ॥४९५॥
रावणोऽपि बलेनाऽथ, शंसमानश्च बन्दिभिः। लङ्काया निर्गतो बाह्ये, छादयन् गगनाङ्गणम् ॥४९६॥
चतुःसहस्रसङ्ख्यस्याक्षौहिणीनां दलेन वै। दैत्यो वा दानवो लोके, दुर्निरीक्ष्यो स्वतेजसा ॥४९७॥
गगनं भूतलं चाऽपि, दलेनाच्छादितं जगत्। वाजिन्त्राणां च निर्घोषैः, श्रवणैः श्रुयते न हि ॥४९८॥
बृन्दितैर्वा नराणां च हेषितैर्वाजिनां तथा। चित्कारैः स्यन्दनानां च, जयशब्दैश्च बन्दिनाम् ॥४९९॥
भट्टानामट्टहासैश्च, वाजिन्त्राणां तथा रवैः। भेरीणां प्रतिशब्दैश्च, कर्णाभ्यां श्रूयते कथम् ॥५००॥

फातराणां कराद्भूमावायुधानि पतन्ति च । वीराणां पुलकोघैश्च, छिन्ना कवचवन्धयः ॥५०१॥
समागतं बलं दृष्ट्वा, रावणस्य महद्भुतम् । रामोऽपि स्वबलं तत्र, सज्जं चक्रेऽतिवेगतः ॥५०२॥
युद्धं कर्तुं तदा लग्ना, भटा वीररसाऽन्विताः । प्रतियुद्धप्रमाणेन, रामरावणयो द्वयोः ॥५०३॥
गजा गजैः समालग्ना, वाजिनो वाजिभिः सह । स्यन्दिना स्यन्दिनोघैश्च, पत्तयः पत्तिभिः सह ।
बाणानां मण्डपे तत्र, गगनं दृश्यते न हि । पात्यते वाजिना वाजिः, ध्वस्यते करिणा करिः ॥५०५॥
निरायुधैर्भटैर्जातैः, युध्यते च परस्परम् । आकर्ष्य केशैरन्योऽन्यं, लेष्टुमुष्टिभिः वेगतः ॥५०६॥
तत्र केचिन्मदाः शूराः, छिन्ने वै दक्षिणे करे । वामेन च रिपुं हत्वा, पपात सह भूतले ॥ ५०७॥
केचिच्छिरसि छिन्नेऽपि, ननर्त वसुधातले । म्रियमाणोऽपरःकश्चित्, पातयन् पतितः क्षितौ ॥५०८॥
कश्चित् पुरस्थितं प्रोचे, रे रे मूढ! म्रियस्व मा । मिलः पुत्रप्रियादीनां, जीवन् यो हि ममाऽग्रतः ५०९
कश्चिद्वीरो परं प्राह, स्वस्थो भव भटोत्तम ! ।संयम्य शिरसः केशान्, पश्चाद्धन भृताऽऽयुधः॥५१०॥
किं ते हि यशसा साध्यं, मृत्वा चाऽत्र रणाङ्गणे। ममाऽग्रतो गते ते हि, कोऽपि हन्ता न चाऽपरः
मृता ये पतिता भूमौ, गजा एव नगाश्च ते। हया मकरसङ्घाश्च, तेषां पादा झषोपमा ॥५१२॥

सम १० ॥ ५५

रुधिरं च जलस्थाने श्वेतछत्राणि फेनवः। भटानामुत्कटौघाश्च, ते एव रत्नराशयः ॥ ५१३ ॥
करीणां ये करास्तत्र, ते एव जलपन्नगाः। गजदेहक्षितौघाश्च, रुधिरं तच्च धातवः ॥ ५१४ ॥
रणार्णवे ध्रुवं मग्ना, कातरा हततेजसः। शूरा वै तरितुं शक्ता, तमेव च रणोऽर्णवम् ॥ ५१५ ॥
एवंविधे महायुद्धे, जाते वीरक्षयावहे। राक्षसानां बलं भग्नं, हतं रामभटोत्तमैः ॥ ५१६ ॥
नश्यमानं बलं दृष्ट्वा, रावणः स्वयमुत्थितः। सो धीरयन् निजान् वीरान्, कुर्वन् परदले भयम्॥५१७
छादयन्नायुधैर्व्योम, त्रासयन् परसैन्यजान्। आरूढः कवचैर्युक्तो, गजे त्रिलोकयभूषणे ॥५१८॥
रणमूर्ध्नि समायाते, रावणे चण्डतेजसि। कान्दिशिकं बलं तस्य, रामचन्द्रस्य चाऽभवत् ॥५१९॥
नश्यमानं बलं दृष्ट्वा, लक्ष्मणो वचनं जगौ। कस्माच्च मद्बलं भग्नं, कुरुते च पलायितम् ॥५२०॥
तदा तं सैन्यकाः प्रोचुः, शृणु नाथ! निगद्यते। रावणोऽत्र समायातो, युद्धार्थं रणमूर्ध्नि ॥५२१॥
यस्य दर्शनमात्रेण, प्रनष्टं सकलं बलम्। तस्य बाणमुखे स्थातुं, केनाऽत्र शक्यते विभो! ॥५२२॥
लक्ष्मणोऽपि हसित्वाऽऽह, भव्यं जातं यदाऽऽगतः। पश्यामि च बलं तस्य, रावणस्य रणाजिने ॥५२३॥
परस्त्रीचोरकं पापं, कुकर्मकरणे रतम्। प्रेषयामि दुराचारं, रावणं यममन्दिरम् ॥ ५२४ ॥

इत्युक्त्वा गजमारुह्य, षट्त्रिंशदायुधैर्युतः । लक्ष्मणः कवचं नीत्वा, युद्धार्थं सन्मुखो ययौ ॥५२५॥
रावणो लक्ष्मणं दृष्ट्वा, स्मित्वा प्राह वचोर्जितम् । रे रे बाल ! कथं मृत्योर्मुखे प्राप्तोऽसि निश्चितम्॥५२६॥
लक्ष्मणोऽपि च तं प्रोचे, रे ! रे ! तस्कर ! तस्कर ! । मदीयां भ्रातृजायां त्वं, स्तेयित्वा जीव्यसे कथम्?॥५२७॥
मम हस्ते चिरात् प्राप्तो, गन्तुं ते न ददाम्यहम् । पापिनां तस्कराणां च, मृत्युरेव न संशयः ॥ ५२८॥
चक्रतुर्विविधं वादं, तावन्योऽन्यं बलोद्धतौ । तदा तं लक्ष्मणः प्राह, रणे व्यक्तिर्भविष्यति ॥५२९॥
तदा तौ चक्रतुर्युद्धं, सुराणां विस्मयावहम् । दृष्टिं मुष्टिं च सन्धानं, मोचनं नोपलक्ष्यते ॥५३०॥
शस्त्रास्त्रैर्विविधैस्तत्र, चक्रासिबाणकुन्तकैः । चक्रतुः परमं युद्धं, चमत्कारकरं नृणाम् ॥५३१॥
महायुद्धे ततो जाते, रावणोऽप्याकुलीकृतः । हत्वा बाणसमूहेन, गजोऽप्यस्य निपातितः॥५३२॥
निपातितं गजं दृष्ट्वा, क्रोधाविष्टोऽपि रावणः । शक्तिं वेगेन संस्मृत्य, मुमोच लक्ष्मणं प्रति ॥५३३॥
शक्तिस्तं लक्ष्मणं प्राप्य, विवेश हृदये द्रुतम्। तदा शक्त्या हतो भूमौ, पपात मूर्च्छयाऽन्वितः॥५३४॥
गतचेष्टं च तं दृष्ट्वा, लक्ष्मणं वानरस्तदा । रामदेवं समागत्य, कथयामास कारणम् ॥५३५॥
रामोऽपि च समागत्य, यदा पश्यति लक्ष्मणं । धरण्यां पतितं दीनं, गतचेष्टं शवं यथा ॥५३६॥

मूर्च्छामवाप्य रामोऽपि, पपात क्षितिमण्डले । परिजनैरुपचारेण, मूर्च्छा तस्य विनाशिता ॥५३७॥
निवारितं तदा युद्धं, रामेण दुःखितात्मना । कथितं रावणस्यैवं, रक्ष्यतां साम्प्रतं रणम् ॥५३८॥
रावणोऽपि जगादैवं, शृणु राम ! विचक्षणः । तव वाक्यं विना युद्धं, करिष्यामि न निश्चितम् ॥५३९॥
इत्युक्त्वा संहृतं युद्धं, मानयुक्तेन तेन च । लङ्कां च जगामाऽसौ, कृतार्थ इव हर्षतः ॥५४०॥
अथ तं लक्ष्मणं नीत्वा, सैन्यमध्ये तु खेचरैः । रक्षाविधानयोगेन, प्राकाराः परितः कृताः ॥५४१॥
रावणस्य भयेनैव, कुटिलस्य विशेषतः । उर्ध्वाधो विधया कृत्वा, रक्षां ते चक्रिरे तदा ॥५४२॥
विलापं परमं चक्रे, रामोऽसौ दुःखपूरितः । वानराश्चिन्तया ग्रस्ता, जातास्ते भयपूरिताः ॥५४३॥
सुग्रीवश्चिन्तया ग्रस्तो, दुःखितोऽभूद् विभीषणः । हनुमानपि मूढोऽभूत्, विराधितोऽतिदुःखितः ॥५४४॥
स्थाने स्थाने स्थिताः वीरा, रक्षार्थे लक्ष्मणस्य च । रामोऽपि विलपन् प्राह, भामण्डलं वीरं प्रति ॥५४५॥
भामण्डल ! त्वया वाच्या, सीताऽपि मम वाक्यतः । तवाऽर्थे लक्ष्मणो वीरः, प्राणैरपि विमोचितः ॥५४
लक्ष्मणस्य च मोहेन, रामो न ज्वलते द्रुतम् । त्वयाऽपि कुलमार्गेण, भवितव्यं च सुन्दरि ! ॥५४७॥
एकं एव महद्दुःखं, स्थितं च मम मानसे । विभीषणस्य च यद्राज्यं, लङ्काया न समर्पितम् ॥५४८॥

हे विराधित! शीघ्रं त्वं, चितां च परिकल्पय । सुर्योदये ध्रुवं प्राणान्, लक्ष्मणो मोचयिष्यति ॥५४९॥
लक्ष्मणे च मृते नूनमावयोर्वै हुताशने । प्रवेशो नियतो भावी, नाऽत्र कार्या विचारणा ॥५५०॥
तावत् कश्चित् खगः प्राह, श्रीशैलं चिन्तयाऽऽकुलम् । सौमित्रेर्जीवनोपायं, कथयामि तवैव हि ॥५५१॥
हानुमानपि हृष्टोऽसौ, तमालिङ्गय जगाविति । कथ्यतां कथ्यतां तच्च, यथाजीवति लक्ष्मणः॥५५२॥
तदा जगाद खेटोऽसौ, शृणु मित्र! वचो मम । अहमप्यनया शक्त्या, पीडितोऽसौ यदा पुरा ॥५५३॥
विशल्यापादधौतेन, जलेनाऽऽच्छोटितस्तदा। तत्क्षणाज्जीवितोऽस्मीति, सत्यं सत्यं वचो मम॥५५४॥
यदाऽऽस्माकं च देशेऽभूत्, मारीति सुरकोपतः। तस्याः पादोदकेनैव, गता सा देशतो ध्रुवम् ॥५५५॥
श्रीशैलोऽपि प्रपच्छैनं, काऽस्ते विशल्यनामिका। खेटो तं च जगादेवं, वृत्तान्तं कथयाम्यहम् ॥५५६॥
द्रोणो वै नाम भूपोऽस्ति, भरतस्यैव मातुलः। तस्य पुत्री विशल्याख्या, विख्याता क्षितिमण्डले॥५५७
तस्य वाक्यं समाकर्ण्य, हनुमान् तत्र तेन च। आगतो वर्तते रामो, यत्र सौमित्रिणा सह ॥५५८॥
रामस्य कथयामास, तेन वृत्तं यदुदितम् । वृत्तान्तं तं समाकर्ण्य, रामोऽप्येवं वचोऽवदत् ॥५५९॥
सोऽस्ति कोऽत्र नरो लोके, जीवापयाति लक्ष्मणः। तदा भामण्डलेनाऽथ, हनुमान् गन्तुमुद्यतः ॥५६०॥

दिव्यं विमानमारुह्य, साकेतानगरीं गतः। गत्वा तत्र च भरतस्य, वृत्तान्त प्रतिपादितम् ॥५६१
भरतोऽपि तदा प्राह, सज्यतां वेगतो दलम्। गत्वा जयामि तं दुष्टं, रावणं लोकनिन्दितम्॥५६२॥
हनुमानपि तं प्रोचे, तत्र गन्तुं न युज्यते। अन्तरे सागरस्तस्य, देशस्याऽपि हि वर्तते ॥५६३॥
मातुलस्य च पुत्री ते, या विशल्याऽभिधानिका। तस्या गन्धोदकं देयं, येन जीवति लक्ष्मणः॥५६४॥
भरतोऽपि च तदा प्राह, साम्प्रतं च निशिथीनी। प्रभातसमये तत्र, गत्वा साऽऽनीयते मया॥५६५॥
तदाऽसौ हनुमान् प्राह, जाते सुर्योदये ध्रुवम्। लक्ष्मणस्यैव मरणं, नियतं च भविष्यति ॥५६६॥
अधुनैव च गत्वा हि, तज्जलमानीयते द्रुतम्। विमानमिदमारुह्य, आगच्छामि त्वया सह ॥५६७॥
भरतोऽपि तेन वाक्येन, सहसोत्थाय वेगतः। विमानेऽसौ समारूढो, ययौ तत्रैव मोहतः ॥५६८॥
तत्र द्रोणमहीपालं, विबोध्य निद्रयाऽऽकुलम्। वृत्तान्तं कथयामास, सर्वं लक्ष्मणसम्भवम् ॥५६९॥
द्रोणोऽपि पुत्रिकां प्राह, रे रे पुत्रि! तवोदकम्। देहि वेगेन येनैव, ध्रुवं जीवति लक्ष्मणः॥५७०॥
कन्या प्रोवाच हे तात!, कोऽसौ लक्ष्मणनामकः। जगादैवं च द्रोणोऽपि, कथं वेत्सि न कन्यकाम्॥५७१॥
दशरथस्य यः पुत्रः, सुमित्रायाः शरीरजः। रामस्यैवाऽनुजो नूनम्, लक्ष्मणोऽसौ बलोद्धतः॥५७२

शक्तिवेधस्तु सञ्जातो, रावणेन कृतोऽस्य च। सूर्योदये ध्रुवं प्राणान्, मोचयिष्यति निश्चितम् ५७३
अतस्तच्छक्तिनाशार्थं, देहि गन्धोदकं तत्र । यथा जीवति सौमित्री, रामदेवो बलान्वितः ॥५७४॥
कन्यया पितरं प्रोक्तं, शृणु तात! वचो मम। लक्ष्मणो मे ध्रुवं स्वामी, गमिष्यामि च तत्र वै ॥५७५॥
गन्धोदकं कथं तस्य, प्रेषयामि शरीरजम्। स्वयं गत्वा च तत्रैव, नमामि चरणौ वरौ ॥५७६॥
तेन वाक्येन ते सर्वे, श्रीशैलाद्यः खगाः । प्रमोदं परमं प्रापुः, नत्वा प्रोचुस्तु तां प्रति ॥५७७॥
शीघ्रमागम्यतां मातः!, कालक्षेपो न युज्यते । सूर्योदये च सञ्जाते, किं तत्र गमनेन वै ॥५७८॥
तेन वाक्येन सा हृष्टा, विमानं प्रमदाऽन्विता। आरुढा पितरं नत्वा, जगादैवं च तान् प्रति ॥५७९॥
वाह्यतां वाह्यतां शीघ्रं, विमानं खगवर्त्मनि । विमानं वाहयामासुः, तदा विमानखेचराः ॥५८०॥
सर्वेऽप्याकाशमार्गेण, द्रुतं तत्र समागताः । यत्राऽसौ वर्तते रामो, लक्ष्मणेन दलेन च ॥५८१॥
कन्यां नीत्वा च प्राकारं, मध्ये ते विविशुस्तदा। यथा यथा समायाति, कन्या तत्र तथा तथा ॥५८२॥
लक्ष्मणश्चेतनायुक्तो, मन्दं मन्दं बभुव च । पपात तत्र सा कन्या, रामस्य पाद्योर्द्वयोः ॥५८३॥
आशीर्वादं च रामोऽपि; दत्वा तौ निर्गतौ बहिः ।कन्यया तं नमस्कृत्य; क्षपितौ चरणौ स्वीयौ५८४

अस्यः सङ्गप्रभावेन, सा शक्तिर्निर्गता द्रुतम् । श्रीशैलेन च सा केशैर्धृता वेगेन शक्तितः ॥५८५॥
क्रोधाविष्टो महाशक्तो, शक्तिं तां स जगाविति । परस्त्रियस्तु नियमो मेऽन्यथा भार्यां करोमि ते
न मुञ्चाम्यधुना दुष्टे!, कर्तुं यच्छक्यते त्वया। तत्सर्वं त्वं विधेह्याशु, प्राप्ताऽसीति मया चिरात् ॥५८७॥
तदा शक्तिस्तु तं प्राह, शृणु वत्स! महाबल !। मुञ्च मुञ्च ममैवाऽशु, नाऽऽगमिष्यामि ते बलम् ५८८
रामस्य प्रचुरं पुण्यं, गतपुण्यो दशाननः । अतएव च ते सैन्ये, नागमिष्यामि निश्चितम् ॥५८९॥
प्रपच्छ हनुमान् विद्यां, का वा शक्तिस्तवैव हि । विद्या हनुमतं प्राह, शृणु वीर! महाबल! ॥५९०॥
सूर्यस्य पातने शक्तिश्चन्द्रस्य ग्रसने तथा । इन्द्रस्य पातने शक्तिः, किमतः पृच्छयते परं ॥५९१॥
शतपञ्चप्रमाणाश्च, तिष्ठामो यत्र कुत्रचित्। अस्माकं हीनता शक्तिस्तवाऽग्रे नियतं विभो! ॥५९२॥
तेन वाक्येन तुष्टोऽसौ, शक्तिं तां मोचयत्तदा। गत्वा सा रावणं प्राह, गन्तुं तत्र न शक्यते ॥५९३॥
अतोऽसौ लक्ष्मणस्तत्र, कन्यासङ्गप्रभावतः । सहसोत्थाय जगावेवं, नीयतां राक्षसः शठः ॥५९४॥
तेन वाक्येन सन्तुष्टाः, सर्वे ते खेचरास्तदा । प्रमोदं परमं प्रापुः रामदेवेन संयुताः ॥५९५॥
उत्सवोऽपि महाँस्तत्र, रामदेवे दलेऽभवत् । भामण्डलोऽथ सुग्रीवो, हनुमाँश्च विभीषणः ॥५९६॥

विराधितादयश्चाऽन्ये, खेचराः कपयस्तदा । परमं हर्षं ते प्रासा, उत्थिते लक्ष्मणेऽखिलाः ॥५९७॥
तदा जय जय शब्दो, सञ्जातो वानरे दले । लङ्काया प्रतिशब्दोऽभूत्, राक्षसां भयकारी सः ॥५९८॥
अवसरे समायातं, व्रतमष्टाह्निकामयं । रावणोऽपि च तं नीत्वा, स्थितोऽसौ जिनवेश्मनि ॥५९९॥
विद्यां स साधयामास, नाम्ना या बहुरूपिणी। साध्यमानां च विद्यां तां, श्रुत्वा रामोऽङ्गदं जगौ ६००
अन्तरायस्त्वया कार्यो, विद्याया साधनस्य च । रामस्य वचनात्सर्वे, गतास्तत्राऽङ्गदादयः ॥६०१॥
तैर्गत्वा विविधोपायाः, विद्यायाः खण्डने कृताः । खण्डिता जपमालाऽस्य, ध्यानं त्यत्याज नो यदा ॥६०२
वलित्वा तु तदा सर्वे, स्वसैन्ये च समागताः । साधयामास तां विद्यां, सम्पूर्णे सोऽष्टमे दिने ६०३
आहूतो रामदेवेन, रावणः सङ्गरं प्रति । महासाधनयुक्तोऽसौ, रावणो निर्ययौ बहिः ॥६०४॥
पूर्ववत् क्रोधसंयुक्तो, जयजयारवसंयुतः । चतुरङ्गेन सैन्येन, रामसैन्यं ययौ हठात् ॥६०५॥
रामोऽपि रावणं वीक्ष्य, समायातं ससाधनं । संनह्य स्वयमुत्तस्थौ, लक्ष्मणेन युतो बली ॥६०६॥
सञ्जातं विषमं युद्धं, रामरावणयोस्तदा । द्वयोश्च सुभटाः सर्वेऽन्योऽन्यं युद्धं च चक्रिरे ॥६०७॥
लक्ष्मणोऽपि तदा प्राह, रामदेवं रणोद्यतम् । विद्यमाने मयि स्वामिन् !, युद्धं ते युज्यते कथम् ॥६०८॥

अनेन रावणेनाऽथ, क्रियते सङ्गरं मया । प्रेषयामि शठं चौरं, मृत्यवे यममन्दिरे ॥६०९॥
रामस्तस्यैव वाक्येन, त्यक्त्वा युद्धं गतोऽन्यतः । चक्रेऽथ संयुगं भीमं, लक्ष्मणो रावणेन च ॥६१०॥
षट्त्रिंशदायुधैस्तौ तु, चक्रतुः समरं तदा । न कोऽपि जीयते केन, द्वयोर्मध्ये यदा रणे ॥६११॥
तदा तौ सुरशस्त्रोघैश्चक्रतुर्युद्धमुत्कटम् । हुताशनाऽभिधं बाणं, मुमोचाऽसौ हि लक्ष्मणं ॥६१२॥
लक्ष्मणो वारुणाऽस्त्रेण, वारयामास वेगतः । पन्नगाऽस्त्रं दशास्येन, मुक्तं च लक्ष्मणं प्रति ॥६१३॥
तेनाऽपि गरुडास्त्रेण, वारितं तु तदा हठात् । तामसास्त्रं पुनः क्षिप्तं, रावणेन त्वरावता ॥६१४॥
आदित्याऽस्त्रेण तेनाऽपि, शस्त्रं तं वारितं क्षणात् । लक्ष्मणेन शिरः छिन्नं, अर्द्धचन्द्रेण तस्य च ६१५
शिरद्वयं ततो जातं, ताभ्यां छिन्ने चतुष्टयं । छिन्ने द्विगुणभेदेन, मस्तकानां सहस्रता ॥ ६१६ ॥
स्थाने स्थाने तदा तानि, जातानि द्विगुणानि च । विद्यायाश्च प्रभावेन, किं किं नो जायते नृणाम् ॥६१७॥
छिन्नानि तानि तेनैव, तदा रुष्टो हि रावणः । सस्मार चक्ररत्नं स, भ्रकुटीकुटिलाननः ॥६१८॥
तत्र स्मरणमात्रेण, चक्ररत्नं समागतं । रावणस्य करे नूनं शत्रुवंशनिकन्दकम् ॥ ६१९ ॥
रावणस्य करे दृष्ट्वा, चक्ररत्नं समागतम् । तदा रामस्य सेनायां, भीताः सर्वेऽपि वानराः ॥६२०॥

चक्रदर्शनमात्रेण, भयं कस्य न जायते । सहस्रारकसंयुक्तं, सुरौघैः सवितं सदा ॥ ६२१ ॥
रावणो लक्ष्मणं प्राह, शृणु मानवकाधमः । जीवन् याहि द्रुतं दूरं, मा म्रियस्व करेण मे ॥६२२ ॥
चक्रेणाऽनेन नूनं ते, खण्डाश्चैव सहस्रशः । भविष्यन्ति न सन्देहो, कथं गच्छासि नो यदा ॥६२३॥
तदाऽसौ लक्ष्मणः प्रोचे, शृणु खेटजनाऽधम । कुलालचक्रतुल्येन, चक्रेणाऽनेन कोऽमुना ॥६२४ ॥
करोमि खण्डतां नूनं, चक्रं तेऽहं चपेटया । अल्पेन वस्तुना त्वं हि, किं तुष्टो रङ्कवद्ध्रुवम् ॥६२५॥
मुञ्चस्व यदि ते शक्तिर्वर्तते तस्कराधिम! । कालक्षेपोऽधुना मूढ!, क्रियते च कथं त्वया ॥६२६॥
मोचयामास तं चक्रं, रावणः क्रोधपूरितः । लक्ष्मणस्य करे चक्रं, स्थितं कृत्वा प्रदक्षिणाम् ॥६२७॥
समागतं करे दृष्ट्वा, चक्रं दशरथात्मजः । रावणं स तदा प्रोचे, रे रे रावण ! मा मृथाः ॥ ६२८ ॥
तवैवाऽनेन चक्रेण, भविता मरणं ध्रुवम् । पतस्व रामदेवस्य, पादयोर्जीवितेच्छया ॥ ६२९ ॥
सीतां मुक्त्वा च तस्याऽग्रे, जीवभिक्षां च याचय । अन्यथा जीवनोपायं, दृश्यते न च खेचरः ॥६३०॥
म्लानास्यो रावणः प्रोचे, भुक्तोरसिष्टेन मे ध्रुवम् । चक्रेणाऽपि मदीयेन तुष्टचित्तः कथं भवान्?॥६३१॥
मुञ्च त्वं वेगतश्चक्रं, कालक्षेपं हि मा कृथाः । निर्द्धनोऽपि धनं प्राप्य, तद्वत्त्वं हर्षितोऽसि किम् ? ॥६३२॥

मोचयामास चक्रं स, तेन वाक्येन लक्ष्मणः । चक्रेणाऽपि च गत्वाऽऽशु, द्विधा चक्रेऽथ रावणम् ॥६३३॥
गतप्राणः पपाताऽसौ, दशास्यो वसुधातले । हतं निर्नायकं सैन्यं, कान्दिशिकत्वमागतम् ॥६३४॥
रावणेऽपि हते तत्र, जातः कलकलो ध्वनिः । रामस्य सकले सैन्ये, जयनादोऽभवत्तदा ॥ ६३५ ॥
संस्कारो रावणस्याऽपि, चक्रतु रामविभीषणौ । इन्द्रजिन्मेघनाथाख्यास्तपोधनमुपागताः ॥६३६॥
तदैव रामदेवस्य, जाताऽऽज्ञा सर्वविष्टपे । चक्रस्य लक्ष्मणः पूजां, चक्रे भक्त्या समन्वितः ॥६३७॥
विभीषणस्य लङ्कायाः, राज्यं सर्वं, समर्पितम् । अन्ये च राक्षसाः सर्वे, मिलिताः रामस्य वेगतः ॥६३८॥
भामण्डलोऽथ सुग्रीवो, हनुमाँश्च विराधितः । अन्ये सर्वेऽपि खेटौघाः, सन्तोषं परमं गताः ॥६३९॥
मिलितोऽसौ रामदेवोऽपि, सीताया वेग ... । ववन्दे मोहविक्लवा ॥६४०॥

अन्येऽपि मिलितास्तस्य, सर्वे वानरराक्षसाः । रामदेवस्य पुण्येन, मुक्त्वा भेटनकं पुरः ॥६४५॥
सेव्यमानोऽपि खेटौघैः, सुखं तस्थौ हि राघवः। गतं कालं न जानाति, निमग्नो सुखसागरे ॥६४६॥
अयोध्यायां च त्यक्तायां, वर्षाणि च चतुर्दश। गतानि रामदेवस्य, लक्ष्मणेन युतस्य च ॥ ६४७ ॥
तदा पुरातनी भूमि, रामदेवन संस्मृता । गमनोत्सुको बभुवाऽसावयोध्यायां सलक्ष्मणः ६४८॥
सुमुहूर्ते चलितो रामो, लक्ष्मणेन समन्वितः । सर्वसाधनसंयुक्तो, धनधान्यसमन्वितः ॥६४९॥
विभीषणोऽपि सुग्रीवो, हनुमाँश्च विराधितः । भामण्डलादयश्चाऽन्ये, सर्वे खेचरपुङ्गवाः ॥ ६५०॥
रामदेवेन सार्द्धं ते, सर्वसाधनसंयुताः । चलिताश्च वहुलक्ष्म्याढ्या विमानैर्वाहनैर्युताः ॥६५१॥
साधयन्तोऽपि देशौघान्, मन्दं मन्दं क्रमाययुः। रामदेवेन संयुक्ताः, सर्वे हर्षसमन्विताः ॥६५२॥
रामो विद्याधरैः सार्द्धं, अयोध्यायां समागतः । तत्रत्यैः सकलैर्लोकैरुत्सवः परमः कृतः ॥६५३॥
भरतोऽपि समायातो, रामदेवस्य सन्मुखं । ननाम विनयेनाऽसौ, रामलक्ष्मणयोः पदौ ॥६५४॥
रामोऽपि च तमालिङ्ग्य, कुशलं परिपृष्टवान्। पुरीं शृङ्गारयामास, भरतो सचिवैः सह ॥६५५॥
महोत्सवेन रामोऽसौ, विवेश नगरीं वरां।मातॄणां मिलितस्तत्र, ताभिरर्घादिकं कृतम् ॥६५६॥

मोचयामास चक्रं स, तेन वाक्येन लक्ष्मणः । चक्रेणाऽपि च गत्वाऽऽशु, द्विधा चक्रेऽथ रावणम् ॥६३३॥
गतप्राणः पपाताऽसौ, दशास्यो वसुधातले । हतं निर्नायकं सैन्यं, कान्दिशिकत्वमागतम् ॥६३४॥
रावणेऽपि हते तत्र, जातः कलकलो ध्वनिः । रामस्य सकले सैन्ये, जयनादोऽभवत्तदा ॥ ६३५ ॥
संस्कारो रावणस्याऽपि, चक्रतू रामविभीषणौ । इन्द्रजिन्मेघनाथाद्यास्तपोधनमुपागताः ॥६३६॥
तदैव रामदेवस्य, जाताऽऽज्ञा सर्वविष्टपे । चक्रस्य लक्ष्मणः पूजां, चक्रे भक्त्या समन्वितः ॥६३७॥
विभीषणस्य लङ्काया, राज्यं सर्वं, समर्पितम् । अन्ये च राक्षसाः सर्वे, मिलिताः रामस्य वेगतः ॥६३८॥
भामण्डलोऽथ सुग्रीवो, हनुमाँश्च विराधितः । अन्ये सर्वेऽपि खेटौघाः, सन्तोषं परमं गताः ॥६३९॥
मिलितोऽसौ रामदेवोऽपि, सीताया वेगतस्तदा । सीता रामस्य चरणौ, ववन्दे मोहविक्लवा ॥६४०॥
सीतामालिङ्ग्य रामोऽपि, कृतार्थत्वं च मेनिरे । विरहोऽपि तयोर्भग्नो, यो वै दुःखस्य दायकः ॥६४१॥
लक्ष्मणोऽपि च सीतायाः, पपात पादयोर्मुदा । तमालिङ्ग्य च सा सीता, कुशलं परिपृष्टवान् ॥ ६४२॥
गतेऽपि विरहे तस्मिन्, तयोर्जातं च यत्सुखं । तत्कथं वर्णितुं शक्यं, तावेव जानीतः स्फुटम् ॥६४३॥
सुखं हि बुभुजे सीता, समं रामेण हर्षिता । रामोऽपि सीतया सार्द्धं, भोगाश्च बुभुजे तदा ॥६४४॥

अन्येऽपि मिलितास्तस्य, सर्वे वानरराक्षसाः । रामदेवस्य पुण्येन, मुक्त्वा भेटनकं पुरः ॥६४५॥
सेव्यमानोऽपि खेटोघैः, सुखं तस्थौ हि राघवः । गतं कालं न जानाति, निमग्नो सुखसागरे ॥६४६॥
अयोध्यायां च त्यक्तायां, वर्षाणि च चतुर्दश । गतानि रामदेवस्य, लक्ष्मणेन युतस्य च ॥ ६४७ ॥
तदा पुरातनी भूमि, रामदेवेन संस्मृता । गमनोत्सुको बभुवाऽसावयोध्यायां सलक्ष्मणः ६४८॥
सुमुहूर्ते चलितो रामो, लक्ष्मणेन समन्वितः । सर्वसाधनसंयुक्तो, धनधान्यसमन्वितः ॥६४९॥
विभीषणोऽपि सुग्रीवो, हनुमाँश्च विराधितः । भामण्डलादयश्चाऽन्ये, सर्वे खेचरपुङ्गवाः ॥ ६५०॥
रामदेवेन सार्द्ध ते, सर्वसाधनसंयुताः । चलिताश्च बहुलक्ष्म्याढ्या विमानैर्वाहनैर्युताः ॥६५१॥
साधयन्तोऽपि देशौघान्, मन्दं मन्दं क्रमाद्ययुः । रामदेवेन संयुक्ताः, सर्वे हर्षसमान्विताः ॥६५२॥
रामो विद्याधरैः सार्द्धं, अयोध्यायां समागतः । तत्रत्यैः सकलैर्लोकैरुत्सवः परमः कृतः ॥६५३॥
भरतोऽपि समायातो, रामदेवस्य सन्मुखं । ननाम विनयेनाऽसौ, रामलक्ष्मणयोः पदौ ॥६५४॥
रामोऽपि च तमालिङ्ग्य, कुशलं परिपृष्टवान्। पुरीं शृङ्गारयामास, भरतो सचिवैः सह ॥६५५॥
महोत्सवेन रामोऽसौ, विवेश नगरीं वरां । मातॄणां मिलितस्तत्र, ताभिरर्घादिकं कृतम् ॥६५६॥

सर्वेषां स च लोकानां, प्रपच्छ कुशलं तदा । चक्रे तत्र स्थितो राज्यं, लक्ष्मणेन समन्वितः ॥६५७॥
मित्राणां सेवकानां च, भ्रातॄणां च विशेषतः । सर्वविद्याधराणां च, ददौ देशान् यथेप्सितान् ॥६५८॥
अनया विधिना राज्यं, कुरुते स निराकुलं । लोकानां च सुखं जातं, रामराज्ये तदा घनम् ॥६५९॥
कुरुतेऽसौ हि सुखं रामो, परदारपराङ्मुखः । पररामायाः पापेन, रावणो नरकं गतः ॥६६०॥
पश्यतां रावणस्यैव, सर्वराज्यादिनाशनम् । दोषेण पररामायाः, कीर्तिनाशं तथैव च ॥६६१॥
परस्त्री हि परं त्याज्या, परलोकविनाशिनी । द्रव्यहानिकरी ज्ञेया, कीर्तिदेहविनाशिका ॥६६२॥
परस्त्रीत्यागिनः शूराः, निर्भयाः सर्वविष्टपे । विचरन्ति यथेच्छं ते, कीर्तियुक्ताः नरोत्तमाः ॥६६३॥
समुद्रं खातिका यस्य, त्रिकूट शाल एव च । परस्त्रीव्यसनेनैव, रावणोऽपि क्षयं गतः ॥६६४॥
अन्येषां क्षुद्रलोकानां, दुःखस्य वर्णना हि का । इहैव द्रव्यहानिस्तु परत्र नरकं व्रजेत् ॥६६५॥
आलिङ्ग्यते वरं क्रुद्धा, व्याघ्री च सर्पिणी तथा । न तु कौतुहलेनाऽपि, पररामा कदाचन ॥६६६॥
परभुक्तां च ये रामां, भुञ्जन्ते वै नराधमाः । तैर्भुक्तं हि परोच्छिष्टं, नाऽत्र कार्यविचारणा ॥६६७॥
इति ज्ञात्वा बुधैस्त्याज्या, पररामाऽतिनिन्दिता । सन्तोषो निजनारीभिः, कर्तव्यो धर्मलालसैः ॥६६८॥

इति विविधविनोदैर्ज्ञा, पितं पापवृत्तम् । सकलसुखनिधानं सेव्यते धर्मरत्नम् ॥
पररमणीकुसङ्गं सर्वथा त्याज्यमेव । भज बुध जिनधर्मं सोमसौम्यं सदैव ॥ ६६९ ॥

ये ये भव्यजना विवेकचतुराः, स्वर्मोक्षसौख्यादराः । सप्तैव व्यसनानि तैः प्रतिदीनं त्याज्यानि धर्मोसये॥
येषां सेवनया विवेकविकलाः, निन्द्यां भजन्ते गतिम् । लोकानामपवादतो हि सततं धर्मस्य नाशो ध्रुवम्

सच्छन्दशास्त्राणि प्रमाणकानि, पुराणकाव्यानि कथामयानि ।
तेषां च नामानि च वेद्म्यहं न, कथं मम स्यात् कविदूषणं न ॥ ६७१ ॥

ये सन्ति केचित् निपुणा जनौघाः शब्दार्थशास्त्रादिविचारदक्षाः ।
तैः शोधनीयो सकलो ममैषो, ग्रन्थो नराणां सुखदायको वै ॥ ६७२ ॥

सप्तव्यसनसमुच्चयकथा ग्रन्थोऽप्यधीते पुमान् । यो वाऽश्रति मानसेऽतिनिपुणे यो वाचते वा स्फुटम्
राज्यं लाभ-विवेक-सौख्यममलं कीर्त्तिं श्रियं सम्पदाम् । स प्राप्नोति मतिविवेकविशदां, पापं परं मुञ्चति

नंदीतटाख्ये विहिते च सङ्घे, श्रीभीमसेनस्य पदप्रसादात् ।
विनिर्मितो मन्दधिया मयाऽयं, विस्तारणायं भुवि साधुसङ्घैः ॥ ६७४ ॥

यो वा पठति विमृश्यति शृणोति भव्योऽपि भावनायुक्तः ।
लभते स सौख्यमनिशं ग्रंथोऽयं सोमकीर्तिना रचितः ॥ ६७५ ॥
रस ६ नयन २ समेते बाण ५ चन्द्रेण १ युक्ते । गतवति सति नूनं, विक्रमस्यैव काले ॥
प्रतिपदि धवलायां माघमासस्य सौम्ये । हरिभदिनमनोज्ञे निर्मितो ग्रन्थ एषः ॥६७६॥
यावत्सुदर्शनो मेरुः, यावच्च सागरा धरा । तावत् नन्दत्वयं लोके, ग्रन्थो भव्यजनाश्रितः ॥६७७॥

इत्याचार्यसोमकीर्तिविरचितसप्तव्यसनकथासमुच्चये परस्त्रीव्यसनफलवर्णनो नाम सप्तमः सर्गः ॥

## ॥ इति सप्तव्यसनकथासमुच्चयः समाप्तः ॥

१ प्राप्तिस्थान-
पंडित मफतलाल झवेरचंद अमदावाद.
२ मास्तर कुंवरजी दामजी–मोटी टोळीनी पाठशाळा, (काठीआवाड) पालीताणा.
३ पंडित भूरालाल कालीदास ठे. आगाखाननी चाली पायधुनी-मुंबई-२